

पण्डितकुलपति

श्रीजीवानन्दविद्यासागर बि, ए,

PANIDT JIBANANDA VIDYASAGARA, B. A.

*Superintendent Free Sanskrit College, Calcutta*

# तारारहस्यम्

## प्रथमः पटलः।

ओं नमस्तारायै।

तारां संसारसारां त्रिभुवनजननीं सर्वसिद्धिप्रदात्रीं
सर्वाद्यां सर्वरूपां सकलगुणमयीं वन्दितां देववृन्दैः।
दिव्ये राजे सरोजे भवभयभयदां राजमानां प्रणम्य
ब्रह्मानन्दाख्यकोऽहं भुवनहितकृते तद्रहस्यं तनोमि॥
ब्रह्मा विष्णुरुमापतिस्त्रिभुवने सृष्टिं स्थितिं प्रालयं
ध्यात्वेमां जगदम्बिकां वितनुते मोक्षप्रदां तारिणीम्।
भक्त्या तद्गतमानसो यदि जनस्तारां भजेद् यत्नतः
स क्षेमङ्करमेतदेव लभते तत्त्यागतो यात्यधः॥
ज्ञात्वा ताररहस्यं भजति यदि जनस्तारकामन्त्रराजं
ज्येष्ठां सिद्धिं लभेतामरवरमनुजैर्दुर्लभां तारकातः।
त्यक्त्वा तारां प्रयाति ध्रुवमतिविपदामास्पदं मोहकूपं
दुःखं शोकञ्च सम्यक् गतिरपि सुतरां नैव भव्या कदाचित्॥
तारासारं समालोक्य तारानिगममेव च।
महानीलं महाचीनं नीलतन्त्रं शिवप्रियम्॥
ताराकल्पं शक्तिकल्पं शक्तिसारं तथैव च।
रुद्रयामलकञ्चैव नीलसारस्वतं तथा॥
लिङ्गतन्त्रं योनितन्त्रं षोढातन्त्रं महामतम्।
तारायाः कुलसर्वस्वं ऊर्द्ध्वाम्नायं विशेषतः॥

नानागमाब्धिं चालोक्य ताराया मन्त्रसिद्धये ।
यत्नै रहस्यं ताराया ब्रह्मानन्दो हिताय वै ॥

इति प्रथमं मङ्गलाचरणम् ।

नानागमार्थविलोकनपूर्वकं श्रीमत्तारादेव्या रहस्यं धर्मकामार्थमोक्षाणां तारासंज्ञैव दायकं सकलगुह्यमत प्रातःकृत्यादिक्रियाज्ञानार्थं देवतासम्बन्धिरूपध्यानादिपन्य साधकहिताय ब्रह्मानन्देन मया यत्नेन वितन्यते ।

प्रथमे निगमे कल्पे रत्नद्वीपे सुरालये ।
श्रुत्वा कालीमुखाद् वाक्यं न च दृष्टः सदाशिव ॥
पुनः पुनः पृच्छमानः प्रत्यक्षैवाकरोच्छिवाम् ।
यदा मूर्च्छा करालास्यो रावणो नाशितः सुरा ॥
वराभयकरा देवी खड्गमुण्डधरा परा ।
लोलजिह्वा घोररूपा तारा सर्वैः सुपूजिता ॥
तदा चिन्तान्विता देवा रुद्रार्थं कृतनिश्चयाः ।
देवताभिः समं ब्रह्मा स्तुतिं कर्तुं समागतः ॥
दृष्ट्वा तान् मोक्षदा देवी कवित्वधनदायिनी ।
मासलज्जा महादेवी दक्षिणे खड्गमावहत् ॥
लज्जया नम्रवक्त्रा च तथा लम्बोदरी परा ।
वक्त्राद्विगलितं वासो ब्रह्मा चर्माम्बरं ददौ ॥
काञ्चीमुद्रां गृहीत्वा च कर्त्री कृत्वाथ दक्षिणे ।
भूमौ च मुकुटं क्षिप्त्वा तत्र रुद्रं समाह्वयत् ॥
भूमौ निपत्य देवेशः पपात चरणान्तिके ।
अभुत द्वादश देवि ! पुस्तकं चावलोकितम् ॥
कला वक्तुं न शक्तोऽहं वद योगं सुरेश्वरि ! ।
पूज्ये मे कालिके ! देवि ! प्रसीद भक्तवत्सले ! ॥
श्रुत्वा वाक्यं शिवस्यापि हसित्वोवाच तारिणी ।

त्वद्रूपाः पुरुषाः सर्वे मद्रूपाः सकलाः स्त्रियः॥
इदं योगे महादेव! भावयस्व दिने दिने।
पादपद्मे ततो नीलपद्मं दत्तं मनोहरम्॥
महीला वामहस्तेन तत्तोयैरभिषिच्य च।
रुद्रदत्त पानपात्रं विधृतं वामपाणिना॥
एतेन तारा सा जाता योर्व्वाधोभ्यो भुजङ्गमः।
महाकालः स एव स्यात्ताराकूपे जगत्त्रये॥
यस्याश्च कारणे सद्यो भोगमोक्षौ करस्थितौ।
एवम्भूता महादेवी ब्रह्माण्डशून्यमध्यगा॥
सृष्टिस्थितिकरी देवी ताराकूपा दयान्विता।
द्वितीये चैव शून्यान्ते सुविराड्रूपधारिणी॥
तृतीये च महाशून्ये तडित्कोटिसमप्रभा।
निराकारा निराधारा तारा सर्व्वार्थसाधिका॥
चतुर्थे शून्यमाश्रित्य विष्णुः पालयते ध्रुवम्।
तस्माज्जातचतुर्वक्त्रः सृष्टिं वितनुते ध्रुवम्॥
पञ्चशून्ये महादेवी शिवरूपा त्रिलोचना।
लयं नयति ब्रह्माण्डं महाकालेन लालिता॥
पुनर्ब्रह्माण्डसिद्धर्थं महाविद्या च तारिणी।
सर्व्वान्ते कालिकां मूर्त्तिं त्यक्त्वा वस्त्रं पुनर्दधौ।
षष्ठे शून्यमयं ब्रह्म विश्वं विश्वेश्वरं तथा।
महामहाशब्दपरा कालिका वीजतारका॥
पञ्चशून्ये स्थिता तारा सर्व्वान्ते कालिका स्थिता॥

इति श्रीपरमहंसपरिव्राजकाचार्य्यब्रह्मानन्दगिरितीर्थावधूत-
विरचिते तारारहस्ये सर्व्वरहस्योत्तमे हरगौरीसंवादे
प्रथमपटले सृष्टिप्रकरणपटलः।

साधको ब्राह्मे मुहूर्त्ते उत्थाय योषादशनं कृत्वा च उत्तराख्यः स्वनाभौ दक्षिणहस्तोपरि वामहस्तं दत्त्वा शिरसि द्वादशार्णसरसिरुहोदरसहस्रदलकमलावस्थितं श्वेतवर्णं नानालङ्कारभूषितं रक्तशक्तिवामभागं त्रिनयनं बिम्बाधरं शक्तिवदनारविन्दं गुरुं समालोकयन् प्रहृष्टमानसं स्वस्तिकासनस्थं विभाव्य मानसोपचारैराराध्य ऐं इति षष्टोत्तरशत जप्त्वा जपं समर्प्य प्रणमेत्।

ओं अखण्डमण्डलाकारं व्याप्तं येन चराचरम्।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः॥
ओं अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः।
उत्थाय पश्चिमे यामे भावयेद् ब्रह्मरन्ध्रतः॥
रक्तशक्त्या समायुक्तं शक्तरूपं महेश्वरम्।
सहस्रारे महापद्मे कर्पूरधवलं गुरुम्॥
उत्थाय पश्चिमे यामे तत्रैतत्त्वं समाचरेत्।
सर्वविद्यासु सर्वत्र प्रात कृत्यादिकर्मसु॥
ध्यानयोगे वामहस्ते दक्षिणं परिधारयेत्॥

इति नानाशास्त्रानुकूलप्रात कृत्यादिवचनात् ताराविषये वैपरीत्यमिति। तारागमे च—

स्वनाभौ दक्षिणे हस्ते वामहस्तं प्रदापयेत्।
भावयेच्च सहस्रारे श्रीगुरुं शक्तियुक्तकम्॥

महानीलेऽपि। ताराविद्यासु सर्वासु भावनादौ व्यतिक्रमः।
स्वनाभौ पाण्योर्योगश्च भूतशुद्ध्यादिके प्रिये!॥
सहस्रारे महापद्मे कुन्देन्दुसदृशप्रभम्।
रक्तशक्त्या समायुक्तं भावयेत् साधकाग्रणीः॥

तारानिगमे च। प्रातः शिरसि शुक्लाब्जे द्विनेत्रं द्विभुजं गुरुम्।

वराभयकरं शान्तं देव्याश्च वदनाम्बुजम्।
दृष्ट्वा हृष्टं ब्रह्ममयं परब्रह्मस्वरूपिणम्।
नानालङ्कारसंयुक्तं भावयेत् स्वस्तिकासने॥
सर्वज्ञानप्रदं देवं ज्ञानानन्दस्वरूपिणम्।
तथा च वाग्भवं वीजं सर्वज्ञानविशुद्धये॥
न जप्त्वा वाग्भवं वीजं तारिणीं यस्तु भावयेत्।
न सिद्धिस्तस्य देवेशि। विघ्नस्तस्य क्रियासु च॥
प्रातः शिरसि शुक्लाब्जे गुरुं सम्भाव्य यत्नतः।
जप्त्वा तु वाग्भवं वीजं सर्वज्ञानविशुद्धये॥
संजप्य वाग्भवं वीजं प्रणमेच्च पुनः पुनः॥

सर्वसाधारणब्रह्माण्डोक्तमन्त्रेण वारद्वयं प्रणमेत्। तत्र प्राणायामचतुष्टयस्यावश्यकत्वम्।

मन्त्रद्वयेन युक्तेन प्रणमेत् श्रीगुरुं सदा।
तारामन्त्रविशेषेण कुलोक्तेन द्वयेन च॥

ततः स्वस्तिकासनस्थः पद्मीमण्डलात् सार्द्धत्रिवलयान्वितां रविकोटिसमप्रभां चन्द्रकोटिसुशीतलां स्वयम्भूलिङ्गवेष्टितां निराकारस्वरूपां परब्रह्ममयीं कुण्डलिनीं ज्ञानानन्दमुदितमानसां महायोगस्वरूपिणीं पुरतः स्वयम्भूकनकवर्णशोभितः पद्मवनसमुद्भवां बहुतरप्रणवानामिकाक्षतशब्दविभागमयीं तत्त्वस्वरूपाम् इडापिङ्गलयोर्मध्ये सुषुम्नामध्यमध्यतः चित्रिणीं ब्रह्मनाड़ीं प्रवेशयेत्। द्वितीयं पद्मं वामतो विभाव्य मृदुमन्दगतिमयीं लोलीभूतां हृत्पद्मे विश्राम्य गुरुयोगं विभाव्य मानसैः पूजयेत्।

विभावयेत् सदा भक्त्या सर्वाद्यां भुजगाकृतिम्।
भूपद्मे लिङ्गमावेष्ट्य राजते ब्रह्मरूपिणी॥

इति शक्तिसारे।

तारासारसद्राध्यायादौ ।

स्वयम्भूनाभि योनौ च लिङ्गे च भावयेच्छिवे ।
शतकोटिं जपन् देवि ! तस्य सिद्धिर्न चैव हि ॥
पुरतो मेरुदण्डस्य त्रिगुणां गुणशालिनीम् ।
इड़ापिङ्गलयोर्मध्ये सुषुम्नामध्यमध्यत: ।
चालयेच्छ्यामलां शुद्धिं ज्ञानसन्दोपनीं पराम् ।
विद्युत्कोटिप्रभायुक्तां विसतन्तुतनीयसीम् ॥
मध्यतो ब्रह्मनाड्या च रविकोटिसमप्रभाम् ।
द्वितीये वामतो युक्ता गुरोरन्तिकमानयेत् ॥
तत्रानीय परां शुद्धां ज्ञानसन्दोपनीं शिवाम् ।
तडित्कोटिप्रभायुक्तां ब्रह्मविष्णुशिवात्मिकाम् ॥
परां कुण्डलिनीशक्तिं साकारां परिभावयेत् ।
तस्य मध्ये समानीय रक्तवर्णां विभावयेत् ॥
सदा सिद्धिमवाप्नोति नान्यथा कल्पकोटिभि: ।
ज्ञानानन्दमयीं साक्षात् सर्वानन्दप्रदायिनीम् ॥
नानालङ्कारभूषाढ्यां भावयेद् गुरुसन्निधौ ।
मानसै: पूजयित्वा च मूलमन्त्रं शतं जपेत् ॥
कृताञ्जलिपुटो भूत्वा चिन्तयेत् परदेवताम् ।
कालत्रिपुरसुन्दर्य्या रूपं तत्र नियोजयेत् ॥
उद्यद्भानुसहस्राभां द्विभुजां शिवसुन्दरीम् ।
न्यास:कृत्यं विधायाथ मूलमन्त्रं जपेत्तु य: ।
तस्य सिद्धिर्महादेवि ! हृदये योगिनीगणै: ॥

एवं गुरुसन्निधौ कुण्डलिनीं साकारां विभाव्य मानसै: संपूज्य मूलमष्टोत्तरशतं जप्त्वा समाप्य प्रणमेत् ॥ ततो भूमौ प्रणम्य कुमारीं ब्राह्मणांश्च दृष्ट्वा पठेत् ।

'श्री अहं देवो न चान्योऽस्मि ब्रह्मैवास्मि न शोकभाक् ।

सच्चिदानन्दरूपोऽहं नित्यमुक्तस्वभाववान्।
ब्रह्मानन्दसदानन्दपरो ज्ञानविधायकः।
तारकाभक्त आनन्दपूर्णानन्दः सदाशिवः॥
भैरवोऽहं सुधाढ्योऽहं तत्त्वज्ञोऽहं कुलप्रियः।
गुरुप्रसादवानस्मि शक्तिसाधकसेवकः॥
रतानन्दः कुलानन्दः कुमारीदास एव च।
कुमारीवणिकोऽहञ्च ताराचरणनायकः॥
इति तारानिगमोक्तं पठित्वा वहिर्गच्छेत्।
प्रातःकृत्यं विना देवि न सिद्धिर्जायते शिवे।।
न पूजाफलमाप्नोति मन्त्रजापस्य निश्चितम्॥
सर्वा क्रिया निष्फला स्यात् वैदिकी तान्त्रिकी तथा।
प्रातःकृत्यविहीनस्य शौचहीना यथा क्रिया॥

इति श्रीपरमहंसपरिव्राजकाचार्य्यब्रह्मानन्दगिरितीर्थस्वामि-
कुलावधूतसरचिते तारारहस्ये सर्वरहस्योत्तमे हरगौरी-
संवादे प्रथमपटले प्रातःकृत्यादिपटलः।

---

ततः प्रातःकृत्यानन्तरं स्नानम्। साधकानां वैदिकी तान्त्रिकी प्रातःकालावधि महानिशापर्य्यन्तं क्रिया वक्तव्या। शिवपूजा तु वैदिकतान्त्रिकयोरैक्यत्वात् तत्पूजनञ्च। अतो नद्यादौ गत्वा मज्जनं कृत्वा "ॐ अद्येत्यादि श्रीमत्तारादेव्याः प्रीतयेऽस्मिन् जले स्नानमहं करिष्ये" इति सङ्कल्प्य जले त्रिकोणं विलिखेत्॥ तथाच तारानिगमे—

देव्याश्च प्रीतये स्नानं कर्त्तव्यं तन्त्रवेदिभिः।
तीर्थमावाह्य तोये च अस्त्रा मज्जनपूर्वतः॥
तत्रैव रुद्रयामले च।
यत्र यत्र महाविद्या साधकैः समुपासिता।

तत्र तत्र त्रिकोणञ्च अधोमुखमुदीरितम् ॥

देवत्रिकोणे कर्त्तव्य ऊर्द्धास्यं विधिसम्मतम् ॥

तत्र। गङ्गे च यमुने चैव गोदावरि सरस्वति।

नर्म्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥

इति अङ्कुशमुद्रया सूर्य्यमण्डलात्तीर्थमावाह्य प्राणायामं करा-ङ्गषडङ्गे विन्यस्य देवीरूपं विचिन्त्य आत्मानं तारामयं विभाव्य मूलं योर्ये दशधा हृदि दशधा जले दशधा जप्त्वा त्रिकोणवृत्त-चतुरस्रं विलिख्य धेनुयोनिमत्स्याङ्कुशमुद्राः प्रदर्श्य सूर्य्याभिमुखं द्वादशधा वारि निक्षिप्य मूलेन मूर्द्धानं सप्तधा अभिषिञ्चेत्। ततः इष्टदेवताचरणाक्षिःसृतजलेन उदङ्मुखः स्नायात्।

तारार्णवादौ। तीर्थमावाह्य तोये च प्राणायामषडङ्गकौ।

देवीरूपं जले ध्यायेदात्मानं तारिणीमयम् ॥

योर्ये हृदि जले जप्त्वा दशधा मूलमन्त्रकम्।

जले त्रिकोणवृत्तञ्च चतुरस्रं लिखेद्बुधः ॥

अङ्कुशं धेनुमुद्राञ्च योनिं मत्स्यं प्रदर्शयेत्।

रवौ रविजलं दत्त्वा सिञ्चेच्छीर्षं तु सप्तधा ॥ इति स्नानम्।

तथाच महाचीनमहातारार्णवादौ।

प्रकुर्य्याद्वैदिकस्नानं तान्त्रिकं तदनन्तरम्।

सन्ध्याञ्च वैदिकीं कृत्वा तान्त्रिकीं स्वयमाचरेत् ॥

जले त्रिकोणं संलिख्य तीर्थान्यावाहयेत्ततः।

तत्त्वेनाचमनं कृत्वा वह्निजायान्तमन्त्रतः ॥

कुर्य्यात् सम्मूलैरुदकं दद्याच्छीर्षे च साधकः।

ततश्च भूमौ दातव्यं सप्तधा साधकोत्तमः ॥

वामहस्ते जलं नीत्वा चाच्छाद्य दक्षिणेन च।

मन्त्रं वारत्रयं जप्त्वा पञ्च वर्णान् जपेत्ततः ॥

क्षान्तं चन्द्रसमायुक्तं सप्तवर्णाद्यमेव च।

वह्निबीजं पृथिव्याश्च वारुणं तदनन्तरम् ॥
हं यं वं लं रं इत्येकजटामन्त्रोऽघमर्षणमन्त्रकम् ॥
मुद्रया स्नापयेच्छीर्षं गलितोदकबिन्दुभिः ।
मुद्रा तु तत्त्वमुद्रा स्यात् सन्ध्यायां कुलतर्पणे ॥
तज्जलं दक्षहस्तेन वामनाड़ीं प्ररोपयन् ।
अस्त्रबीजेन मन्त्रेण पुरः पाषाणवज्रके ॥
ताडयेत् साधकः सर्वसिद्धये ज्ञानसिद्धये ।
कृष्णवर्णं जलं ध्यात्वा पापेन पुरुषेण च ॥
नाडीनां क्षालनं कृत्वा देहस्य क्षालनं तथा ।
ततश्च तर्पयेद्देवीममृतानन्दरूपिणीम् ॥
देवान्मुनीन् पितॄंश्चैव गुरुं परगुरुं ततः ।
परापरगुरुञ्चैव परमेष्ठिगुरुं ततः ।
ततो मूलं समुच्चार्य्य देवी तारां ततः परम् ॥
श्रीमदेकजटां पश्चात् तर्पयामि ततःपरम् ।
प्रकाशशक्तियुताय इदमर्घ्यमहं ददे ॥
मार्त्तण्डमण्डले ध्यात्वा ताराञ्चैकजटां तथा ।
गायत्र्यार्घ्यं प्रदद्याच्च त्रयं कुसुमसंयुतम् ॥
गायत्रीञ्च ततो ध्यायेज्जपेद्विंशतिसंख्यकाम् ॥

जलेऽधोमुखः त्रिकोणं विलिख्य ॐ गङ्गे चेत्यादिना तीर्थमावाह्य योनिमुद्रां प्रदर्श्य श्रीं आत्मतत्त्वाय स्वाहा, श्रीं विद्यातत्त्वाय स्वाहा, श्रीं शिवतत्त्वाय स्वाहा, इति आचम्य मूलेन कुशेन सप्तधा शीर्षे भूमौ सप्तधा दत्त्वा वामहस्ते जलं नीत्वा दक्षहस्तेनाच्छाद्य तेजोरूपं जलं ध्यात्वा मूलं त्रिवारं तत्र पश्चात्, हं यं वं लं रं इति त्रिरभिमन्त्र्य गलितोदकबिन्दुभिः तत्त्वमुद्रया मूर्द्धानं सप्तधा अभ्युक्ष्य शेषजलं दक्षहस्तेनादाय इड़या आकृष्य देहान्तःपरं प्रक्षाल्य तज्जलं कृष्णवर्णं ध्यात्वा वाम-

कुक्षिस्थितं पापपुरुषेण सह पुटकाक्षितवामाभिधायां ताडयेत्। ततो हस्तं प्रक्षाल्य तारां कृत्वा देवांस्तर्पयामि, ओं ऋषींस्तर्पयामि, ओं पितॄंस्तर्पयामि, गुरूंस्तर्पयामि, ओं परमगुरूंस्तर्पयामि, ओं परापरगुरूंस्तर्पयामि, ओं परमेष्ठिगुरूंस्तर्पयामि। मूलमुच्चार्य तारां श्रीमदेकजटां तर्पयामि स्वाहा इति त्रिः। रक्तपुष्पसहितमर्घ्यं गृहीत्वा ओं ह्रीं हं सः प्रकाशशक्तिसहिताय इदमर्घ्यं ददे। इति सूर्यायार्घ्यं सूर्यमण्डले देवीं ।

देव्यै श्रीमदेकजटायै इदमर्घ्यं नमः इति त्रिः। ततः कृताञ्जलिः

ओं प्रातराधारकमले हुतभुङ्मण्डलोपरि।
वाग्बीजरूपां विद्यां तां विद्युत्पटलभास्वराम्॥
पुष्पबाणेक्षुकोदण्डपाशाङ्कुशलसत्कराम्।
स्वेच्छागृहीतवपुषीं गुरुविद्याकरात्मिकाम्॥
मध्याह्ने हृदयाम्भोजकर्णिकासूर्यमण्डले।
कामबीजात्मिकां देवीं पलाशकरसारुणाम्॥
प्रसूनबाणपुण्ड्रेक्षुचापपाशाङ्कुशान्विताम्।
परिष्कृतां च मुख्याभिः षट्त्रिंशत्तत्त्वसेविताम्॥
सायाह्ने सरोजस्थे चन्द्रे चन्द्रसमद्युतिम्।
शक्तिबीजात्मिकां चापबाणपाशाङ्कुशान्विताम्॥
चिन्तयित्वा भगवतीं नित्याभिः परिवारिताम्।
युगनित्याक्षराकारां घण्टिकास्वरसन्निभाम्॥
तारासारमतो ध्यायेद् गायत्रीं तारकामयीम्।
त्रिपुराया विशेषेण देव्याश्चैकजटामयीम्॥

इति तारासारोक्तवचनात्। त्रिपुरसुन्दरीविषये गायत्र्या इदं ध्यानम्।

तथा नीलसरस्वतीतन्त्रे तारानिगमे च ।
ताराये च पदं प्रोच्य विद्महे तदनन्तरम् ।
महोग्राये ततो दद्याद्धीमहीति ततः परम् ॥
तन्नो देवीति चोच्चार्य ततो दद्यात् प्रचोदयात् ।
"ओं ताराये विद्महे महोग्राये धीमहि तन्नो देवी प्रचोदयात्" इति तारानिगमादिनामाग्न्यसम्मता गायत्री जप्तव्या ।
सामान्यमादौ जप्त्वा च द्वयधा साधकोत्तमः ।
विशेषिकां जपेद्दिव्यां गायत्रीं सर्वसिद्धिदाम् ॥
शतं वा विंशतिं वापि यो जपेत् साधकाग्रणीः ।
सर्वपापविनिर्मुक्तः स्वयं तारापुरे वसेत् ॥
गोघ्नश्चैव कृतघ्नश्च ब्रह्मघ्नोऽपि च यो नरः ।
गुरुतल्परतो वापि स्नुषायां वा रतो यदि ।
एतैः पापैर्विमुच्येत सत्यं सत्यं सदाशिव ! ।
कुमारीगमनाद्दोषो न भूतो न भविष्यति ॥
ततश्च मुच्यते लोको गायत्रीस्मरणादपि ।
गायत्र्या आगमोक्तायाः शतमात्रजपादपि ॥
एतैः पापैर्विमुच्येत सत्यं सत्यं सुरेश्वर ! ॥
एतैः पापैर्विमुक्तश्च विशेषस्मरणादपि ॥
तस्मान्निगदिता विद्या जप्तव्या सिद्धिमिच्छता ।
कूर्चबीजं समुद्धृत्य भगवत्येकजटे ततः ।
विद्महे घोरदंष्ट्रे च धीमहीति ततः परम् ॥
तन्नस्तारे ततो जप्त्वा ततो गद्यं प्रचोदयात् ॥
"हूं भगवत्येकजटे विद्महे घोरदंष्ट्रे धीमहि तन्नस्तारे प्रचोदयात्" इति शतं विंशतिं वा जप्त्वा समर्प्य मूलमष्टोत्तरशतं जपेत् ।
गायत्रीं परिजप्याथ मूलमन्त्रं जपेन्न च ।

सा सन्ध्या निष्फला प्रोक्ता ह्यभिचाराय कल्पते ॥
प्रातःसन्ध्याविहीनश्च न च स्नानफलं लभेत् ।
मध्याह्नसन्ध्याहीनश्च न पूजाफलमाप्नुयात् ॥
सायं सन्ध्याविहीनस्य जपविघ्नः सदा भवेत् ।
तस्मात् सुन्दरि ! यत्नेन सन्ध्यात्रयमुपाचरेत् ॥
प्रातर्न तर्पणं कार्य्यं न च सायं विशेषतः ।
मध्याह्ने तर्पणं कृत्वा यथोक्तफलवान् भवेत् ॥
अर्घ्यहीना तु या सन्ध्या गोफदुःखप्रदा मता ।
अर्घ्यं त्रिसन्ध्यं दातव्यमन्यथा निष्फलो जपः ॥
समस्तापि च गायत्री सत्यं सत्यं वरानने ! ॥

ततः संहारमुद्रया तत्तेजः स्वहृदि नयेत् प्रणम्य चे पूजां-चरेत् । इत्येषं सन्ध्या श्रीमदेकजटाविषया इति ।

अथ उग्रतारासन्ध्या ।

मूलेन त्रिर्जलं देवतायै दत्त्वा वामहस्ते जलमादाय पूर्ववदाच्छादनम् । जपाघमर्षणं च ततस्तथा चाचमनम् । ततो मूलमुच्चार्य "श्रीमदुग्रतारा देवीं तर्पयामि नमः" इति त्रिः । ततः श्रीं ह्रीं ह्रूं सः इदमर्घ्यं श्रीसूर्याय नमः । इति गायत्र्या सूर्यमण्डलस्थायै श्रीमदुग्रतारायै इदमर्घ्यं नम इति त्रिः । ततो गायत्रीं ध्यायेत् ।

मूलेन त्रिर्जलं दत्त्वा देवतायै वरानने ! ।
ततो देव्याः प्रकर्त्तव्यमघमर्षणमुत्तमम् ।
ततः स्तुत्वाचमं कुर्य्यात् ततः स्यादिष्टतर्पणम् ।
अर्घ्यं दत्त्वा च गायत्र्या ध्यानं कुर्य्याच्च साधकः ॥
देवतातर्पणे चैव तुष्टाः स्युः सपङ्क्तयः ।
शरीरेऽप्याश्रिता देव्याः सन्ति याम्यराक्षसाः ॥
सर्वज्ञानादिकं चात्र ध्यानं सर्वं त्यावहम् ।

सर्व्वदेवमयी यस्मात् तारिणी त्रिगुणात्मिका ॥
प्रातः । उद्यद्भानुसहस्राभां पुस्तकाक्षकराम्बुजाम् ।
कृष्णाजिनाम्बरां ब्राह्मीं ध्यायेत्तारकिताम्बरे ॥
मध्याह्ने । श्यामवर्णां चतुर्बाहुं शङ्खचक्रलसत्कराम् ।
गदापद्मधरां देवीं सूर्य्यासनकृताश्रयाम् ॥
सायाह्ने वरदां देवीं गायत्रीं संस्मरेत्ततः ।
शुक्लां शुक्लाम्बरधरां वृषासनकृताश्रयाम् ॥
त्रिनेत्रां वरदां पाशकपालशूलधारिणीम् ।
सूर्य्यमण्डलमध्यस्थां ध्यायन् देवीं समभ्यसेत् ॥
लज्जावीजं समुद्धृत्य उग्रतारापदं ततः ।
सम्बोधनान्तं देवेशि ! विद्महे तदनन्तरम् ॥
श्मशानवासिनिपदं धीमहीति ततः परम् ।
तन्नस्तारे समुद्धृत्य प्रचोदयात् पदं ततः ॥
सम्बोधनान्तं देवेशि ! ततः स्यात्तु प्रचोदयात् ॥
"ह्रीं उग्रतारे विद्महे श्मशानवासिनि धीमहि तन्नस्तारे प्रचोदयात्" इति ।

ततः सामान्यगायत्रीं दशधा जप्त्वा समाप्य विशेषगायत्रीम् अष्टोत्तरशतं जपेत् । ततः संहारमुद्रया तत्तेजः स्वहृदये नयेत् । इति उग्रतारासन्ध्या ।

मूलेन जलं संशोध्य सूर्य्याभिमुखं पञ्चधा जप्त्वा जलञ्च पञ्चधा दत्त्वा औं ह्रीं स्वाहा इत्याचम्य कृताञ्जलिः ।

श्रीं श्मशानालयमध्यस्थां चतुर्वर्गप्रदायिनीम् ।
महामेघप्रभां देवीं नीलपद्मे विराजिताम् ॥
सर्व्वाभरणशोभाढ्यां लोचनं हरनेत्रतः ॥

इति पठित्वा जले षट्कोणं विलिख्य तीर्थमावाह्य तत्त्वेनाचमनं कृत्वा मूलेन त्रिर्जलं भूमौ दद्यात् इत्यघमर्षणम् ।

ततश्चैकजटावत् तर्पणं विधाय अर्घ्यं दद्यात्।

जलमूले च संशोध्य पञ्चधा मूलमन्त्रकम्।

पञ्च वारान् जलं दत्त्वा पूजावश्याचमं चरेत्॥

सूर्यस्य मण्डले देवीं ध्यात्वा चाचमनं चरेत्।

ततश्चैकजटावच्च सन्ध्यां कुर्य्यात्तु साधकः॥

अर्घ्यं तु गायत्र्या सूर्य्यमण्डलस्थायै तारादेव्यै श्रीनील-सरस्वत्यै इदमर्घ्यं स्वाहा। इति त्रिः। ततो ध्यानम्।

प्रातः। सूर्य्यमण्डलसंलग्नां मुक्ताहारविशोभिताम्।

द्विनेत्रां द्विभुजां देवीं चतुर्वक्त्रां सरोजजाम्॥

मध्याह्ने विष्णुरूपाञ्च चतुर्हस्तांञ्च भैरवीम्।

मुक्तामाणिक्यसंयुक्तां नानाहारादिशोभिताम्॥

मन्त्रसिद्धिप्रदां देवीं गायत्रीं साधकाग्रणीः॥

सायाह्ने सूर्य्यसंस्थाञ्च पञ्चवक्त्रां त्रिलोचनाम्।

माहेश्वरीं जगद्धात्रीं जगज्जृम्भणकारिकाम्॥

तारं पूर्वं समुद्धृत्य नीलसरस्वतिपदम्।

धीमहि प्रथमं योज्यं शारदायै च विद्महे॥

ततः शिवे पदञ्चोक्त्वा ततो दद्यात् प्रचोदयात्॥

"ॐ नीलसरस्वति धीमहि शारदायै विद्महे तन्नः शिवे प्रचोदयात्" इति गायत्रीं यथाशक्ति जपेत्।

ततः सर्वमेकजटावत्। तारार्णवे महाचीने च विशेषः।

स्त्रीणाञ्चापि च शूद्राणां ब्राह्मणानां पृथक् पृथक्।

ब्राह्मणेन प्रकर्त्तव्यं यद्यद् उक्तं हि पुस्तके॥

अन्यथा निष्फलं विद्यात् सर्वा पूजादिका क्रिया।

प्रातःकृत्यं तथा स्नानं तथा सन्ध्यात्रयं शिवः॥

स्त्रीशूद्रयोस्तारमन्त्रे लज्जाबीजं प्रकीर्त्तितम्।

वह्निजायामनुर्यत्र नमस्तत्र प्रकीर्त्तितम्।

सर्वत्र पूजाहोमादावविशेषो विधिर्मतः ॥
इति नीलसरस्वतीसन्ध्या ।
ततो देव्या मनुं वक्ष्ये ताराख्यं सदाशिवे ।।
यस्य विज्ञानमात्रेण जीवन्मुक्तो भवेन्नरः ॥
अथ बीजकोषमहानीलतारानिगमादौ—
ब्रह्मा पृथ्वी वामनेत्रं चन्द्रबिन्दुसमन्वितम् ।
कामबीजं समाख्यातं त्रैलोक्यजयदायकम् ॥
शान्तस्तेऽसमायुक्तं वामनेत्रं सचन्द्रकम् ।
लज्जाबीजमिति ख्यातं सर्वसिद्धिप्रदायकम् ॥
षष्ठस्वरसमोपेतं हकारं चन्द्रखण्डकम् ।
कूर्चबीजमितिख्यातं त्रिषु लोकेषु विश्रुतम् ॥
पवर्गस्य द्वितीयस्य टवर्गस्याद्यमेव च ।
सर्वेश्वाकारं सन्नम् अस्त्रबीजं प्रकीर्त्तितम् ॥
चन्द्रखण्डसमोपेतं द्वादशस्वरमीरितम् ।
वाग्भवं तच्च विज्ञेयं वाचःसिद्धिप्रदायकम् ॥
सर्वोदयस्वरं देवि ! चन्द्रखण्डविभूषितम् ।
तारं प्रणवमित्युक्तं ब्रह्मविष्णुशिवात्मकम् ॥
पञ्चमस्वरसंयुक्तं हकारं वर्मबीजकम् ॥
जलाग्निबिन्दुसंयुक्तं चतुर्दशस्वरान्वितम् ।
अङ्कुशं बीजमाख्यातं त्रैलोक्यस्य शुभावहम् ॥
मादिभान्तं विसर्गान्तं छद्बीजं परिकीर्त्तितम् ॥
शान्तं यस्य चतुर्थं च द्वितीयस्वरसंयुतम् ।
तदन्तञ्च हकारञ्च वह्निजायासमन्वितम् ॥
ब्रह्माग्निर्वामनेत्राक्तं द्विजराजसमन्वितम् ।
वधूबीजमिति ख्यातं वधूरिव यशस्विनी ॥
बालस्त्वं वन्दनीयस्त्वं दासस्त्वं गुरुरेव च ।

माता न गोपयेद्वाक्यं बालकेभ्यः कदाचन ॥
तस्मात्तत् पृच्छतां नाथ ! यथाहं देवदुर्लभम् ।
तारामन्त्रं महादेव ! सर्वसिद्धिप्रदायकम् ॥
काली तारा महाविद्या षोडशी भुवनेश्वरी ।
भैरवी छिन्नमस्ता च मातङ्गी कमलात्मिका ।
धूमावती च बगला महाविद्याः प्रकीर्त्तिताः ॥
एतासां श्रवणादेव सर्वसिद्धीश्वरो भवेत् ॥
विष्णुविद्या-देवविद्याशिवविद्याविभेदतः ।
शक्तिविद्याप्रभेदेन विद्यावर्गाः प्रकीर्त्तिताः ॥
सत्यादौ त्रियुगान्तश्च विद्या जागर्त्ति नित्यशः ।
कलौ जागर्त्ति काली च कली जागर्त्ति नित्यशः ।
कलौ काली कलौ कृष्णः कलौ गोपालकालिका ॥
काली तारा महाविद्या महासिद्धिप्रदायिनी ।
महाविद्यासु सर्वासु कलौ सिद्धिरनुत्तमा ॥
सर्वविद्यामयि देवि ! कलौ सिद्धिरनुत्तमा ।
कालिका तारका विद्या सर्वाम्नायैर्नमस्कृता ॥
तयोर्यजनमात्रेण शिवः साक्षात् सदाशिवः ॥
यथा काली तथा तारा तथा नीलसरस्वती ।
सर्वाभीष्टफलं दद्यात् तथा त्रिपुरसुन्दरी ॥
अभेदमतमास्थाय यः कश्चित् साधयेत्परः ।
त्रिलोके स तु संपूज्यः स्यात्तारासुत एव सः ॥
भेदं कृत्वा तु यो मन्त्री साधयेदत्र साधनम् ।
न तस्य निष्कृतिर्देवि ! निरये पच्यते हि सः ॥
एतासां साधनेनैव यशः सिद्धिश्च नित्यशः ।
केवलां भक्तिमास्थाय चतुर्वर्गं लभेत् करे ॥
त्रिपुरा च महाविद्या बहुसाधनसिद्धिदा ।

यस्याः प्रसादामात्रेण भोगो मोक्षश्च जायते ॥
कालिका तारका विद्या कलौ सिद्धिप्रदा सदा ।
दुःखं विना प्रसीदेत कलौ जागरणात्मिका ॥
न वा प्रयोगबाहुल्यं न्यासजालादिकं तथा ।
न तत्र पश्चाचारः स्यात्तस्मात् तत्साधनं शुभम् ॥
कालिकासाधनं देवि ! मत्कुले कालिकार्चने ।
राजते तद्धि तत्रैव प्रबुध्य साधनञ्चरेत् ॥
यस्या मूर्त्तिर्द्वितीया या सृष्टिमूले व्यवस्थिता ।
एतस्याः साधनञ्चैव सर्वसिद्धिप्रदायकम् ॥
धनं धान्यं शुभं ( सुतं ) जायां भोगं मोक्षं तथैव च ।
अचिराल्लभते वाणीं यस्याः स्मरणमात्रतः ॥
नाधीत्य छन्दःशास्त्राणि विनालापं कवेरपि ।
गद्यपद्यमयो वाणी बलात् तस्य प्रजायते ॥
अणिमा लघिमा व्याप्तिः प्राकाम्यं महिमा तथा ।
अदर्शनं स्त्रीलरूपं पक्षिस्तम्भं जलस्य च ॥
चन्द्रसूर्याग्निभूतानां स्तम्भको विभुरेव सः ।
मन्त्रसिद्धिस्तथा सिद्धिः पुराणागमसिद्धिभाक् ॥
उपचारविशेषेण राजपत्नीं वशं नयेत् ।
चतुःषष्टिप्रकारेण सिद्धिराकाशगामिनी ॥
पञ्चशून्ये स्थिता तारा सर्वान्ते कालिका स्थिता ।
सिद्धयः सन्ति यत्रापि तदानीय प्रदीयते ॥
यदि साधयितुं देवि ! शक्यते तारकाकुले ।
तदा सिद्धिमवाप्नोति सर्वदा कुलमण्डले ॥
कुलाचारविहीनस्य न सिद्धिर्न च सद्गतिः ॥
ब्रह्मघ्न कृतघ्न गुरुस्त्रीपागतश्च यः ।
कन्यागत, स्नुषागश्च ब्राह्मणीगो गवीगतः ॥

हिंसावान् सर्वजन्तूनां ब्राह्मणानां विशेषतः ।
पृथिव्यां रेतसां पातः शिवपूजाबहिर्मुखः ॥
शृणु वत्स ! महादेव ! महापातकिनो यथा ।
एतेभ्यो मुच्यते देव ! तारामन्त्रः श्रुतो यदि ॥
सर्वपापैर्विनिर्मुक्तः सर्वपापयुतोऽपि सः ॥
कुलदीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः ।
तस्मात् सर्वप्रयत्नेन ताराया देशिको नरः ॥
कुलाचारविहीनश्चेत् सर्वपापैरवाप्स्यति ॥
कुलाचाररतो यस्तु तर्पयेत् कुलदेवताम् ।
नित्यं श्रीतारकां देवीं तस्य सिद्धिः करे स्थिता ॥
आचारज्ञानवान् यत्र क्रियते न कुलक्रिया ।
पच्यते नरके घोरे कल्पकोटिशतैरपि ॥
परदाररतो यत्र चक्रमध्ये भवेन्नरः ।
शूनीविष्ठाकृमिर्भूत्वा तिष्ठेत् कल्पायुतं भुवि ॥
साधनञ्च समासाद्य परयोषारतो भवेत् ।
मातुर्योनिं परित्यज्य विहरेत् सर्वयोनिषु ।
निर्विकारो निर्विकल्पो भवेत् साधकसत्तमः ॥

मातृपदं सक्षमातृपरम्। इति सद्गुरुसिद्धानन्दगिरि-प्रोक्तवान् तारानिगमादिदर्शनात्।

शक्यते यस्तु वै दातुं स्वयोषां भक्तवत्सलाम् ।
तदा योषां समानीय ह्यन्येषां साधयेत् ध्रुवम् ॥
स एव साधकश्रेष्ठो निर्विकल्पाय निश्चितम् ।
साधकेभ्यः प्रदीयेत तदान्यां परिगृह्यते ॥
न दातुं शक्यते यस्तु स्वयोषां देववत्सलः ।
नटीं स तु समानीय साधयेच्छक्तिसाधनम् ।
स्वयोषां दीयते यस्तु चक्रमध्ये तु साधकः ।

गुरुभ्यः साधकेभ्यश्च तस्य शौर्यं वसाम्यहम् ॥
सर्वसिद्धिस्तस्य देव। चक्षुषोस्तस्य गोचरा ॥
इत्यादि तारानिगमादिचीनान्तम्।
अथ विद्या वक्ष्यते।
तारकत्वात् सदा तारा तस्य भेदविभेदतः ॥
आद्याकल्पे मुक्तकेशी रुद्रस्त्वेकजटः स्वयम्।
अस्मात्त्वेकजटा प्रोक्ता मन्त्रयात्रा निरूप्यते ॥
वशिष्ठाराधिता विद्या न तु मोक्षफला यतः।
अतस्तेनापि मुनिना शापो दत्तः सुदारुणः ॥
ततः प्रभृति विद्येयं फलदात्री न कस्यचित् ॥
तैस्तदुद्धारितं तेन शिवेन गुरुणा स्वयम् ॥
लज्जाबीजं वधूबीजं कूर्चबीजमतःपरम्।
अस्त्रान्तमनुना ख्यातं पञ्चरश्मिस्वरूपकम् ॥
इति चैकजटाविद्या सर्वशास्त्रेषु गोपिता।
सर्वशास्त्रे गोचरा च कामिनी सिद्धिदायिनी ॥
महापातककर्मेण चिती यदि च मानवः।
एतस्य श्रवणाद्देवि! जीवन्मुक्तो भवेत् ध्रुवम् ॥
श्रीतारा नैव दातव्या भूमिस्वर्गरसातले।
यदि प्रदीयते देवी निरये पच्यते ध्रुवम् ॥
ज्येष्ठपुत्राय शान्ताय स्वरूपज्ञानशालिने।
श्रीयुतां यदि साधेत शूद्रो मोहवशंगतः।
तारकाद्यां महाविद्यां पतनं तस्य निश्चितम् ॥
स्त्रीणाञ्चापि वरारोहे! निषिद्धं सर्वदेव हि ॥

आदौ स्त्री एकजटा उद्धारिता ततः श्रीतारा नोक्ता सर्वत्र दोषश्रवणात् स्त्रीयधर्मत्वाच्च।

श्रीबीजाद्या यदा विद्या तदा श्रीः सर्वतोमुखी ॥

वाग्भवाद्या यदा विद्या वागीशत्वप्रदायिनी ।
पञ्चरश्मिर्महाविद्या लभ्यते यदि भाग्यतः ॥
तस्य भोगश्च मोक्षश्च करस्थ एव शङ्कर ! ॥

इत्येकजटादेव्या शक्तिसिद्धिमन्त्रः ।

लज्जाद्या चापरा चासौ भोगमोक्षप्रदायिका ।
मार्द्धपञ्चाक्षरं मन्त्रं महासिद्धिप्रदायकम् ॥

एतस्या गायत्री। "ओं तारायै विद्महे मोक्षदायै धीमहि तन्नो नीले प्रचोदयात्" । इति तारामन्त्रगायत्री ।

कामाख्या चापरा विद्या कामतारा प्रकीर्त्तिता ।
भोगमोक्षप्रदा देवी सर्वशास्त्रे प्रपूजिता ॥

इति कामतारामन्त्रः । अस्या गायत्री तथैव ।
"ओं कामाख्यायै विद्महे कुलकौलिन्यै धीमहि तन्नः श्यामे प्रचोदयात् । इति एकजटाभेदः ।

फडन्तश्च महामन्त्रः सर्वतन्त्रशुभावहः।
महाकालप्रिया देवी भोगमोक्षप्रदायिनी।

ह्रं ह्रीं स्त्रीं फट्॥ एतस्या गायत्री। "ॐ तारकायै विद्महे महाकालप्रियायै धीमहि तन्नः शक्तिः प्रचोदयात्"॥ इति महाकालप्रियागायत्रीमन्त्रः।

अथ नीलसरस्वत्याः प्रकरणम्।

तारायैकजटामन्त्रो नीलवाण्याः प्रकीर्तितः।
यस्यास्तु स्मरणात् सम्यग् वागीशत्वं लभेद्ध्रुवम्॥

अस्या गायत्री। "ॐ नीलसरस्वत्यै विद्महे श्रीतारायै धीमहि तन्नो देवि प्रचोदयात्" इति॥

वाग्भवाद्या चैकजटा महानीलसरस्वती।
अस्याश्च स्मरणात् सद्यः सर्वसिद्धीश्वरो भवेत्॥

अस्या गायत्री। तृतीयसन्ध्यायां लिखिता। उग्रतारासन्ध्यायां गायत्री स्मृता॥

अथ कुब्जिकाप्रकरणम्।

कुब्जिका विद्या मन्त्रस्तु। सर्वत्र प्रयोगे पद्मावती च।
लज्जावधूकूर्चबीजप्रयोगः सिद्धिदायकः।
कुब्जिकेयं समाख्याता सर्वतन्त्रेषु गोपिता॥
प्रणवं पूर्वमुद्धृत्य पद्मे पद्मे पदं ततः।
महापद्मे पद प्रोच्य पद्मावतिपदं तत।
मायि स्वाहा महामन्त्रप्रयोगः सिद्धिदायकः॥

"ॐ पद्मे पद्मे महापद्मे पद्मावति! श्रीं ह्रीं स्वाहा" अत्र शास्त्रे मायि इति श्रवणाल्लज्जाद्वयं बोध्यम्। ये तु सम्बोधनान्तमायाशब्दं वदन्ति ते म्लेच्छाः। तारानिगमे पद्मावतीप्रकरणे।

तारं पद्मे च पद्मे च महापद्मे ततःपरम्।

पञ्चाक्षरि ततो षडक्षरं स्यात्ततो मनुः ॥
तारकत्वात् सदा तारा या काली सैव निश्चिता ।
सहयोऽप्याथ मन्त्राः स्युः सर्वतन्त्रागमादिषु ॥
शक्तिसिद्धा महाविद्याः सारात् सारतराः स्मृताः ।
षट्विद्यासमो नास्ति भूतले सिद्धिदो मनुः ॥
एतासां सर्वमन्त्राणां देवतास्त्रितयाः स्मृताः ।
आद्या चैकजटा प्रोक्ता द्वितीया चोग्रतारका ।
तृतीया नीलवाणी स्याद् भोगमोक्षप्रदा मता ॥
अत्र एकजटामन्त्रोद्धारादिकलक्षणं लिखितं संक्षेपतः ।
उग्रापत्तारिणी यस्मादुग्रतारा प्रकीर्तिता ।
दत्ता वाक् नीलया यस्मात्तस्मान्नीलसरस्वती ॥
नीलया इत्यत्र लकारपाठस्तु न तदा नीलसरस्वतीति भवति । एतत्तु भ्रान्ता वदन्ति ।
एतासामष्टमन्त्राणां ऋषिच्छन्दांसि साधक ।
शृणु चात्र प्रवक्ष्यामि रहस्यं मम सम्मतम् ॥
नीलाचारादिकं द्रष्टा पुरश्चरणमेव च ।
प्रत्येकञ्च प्रवक्ष्यामि षट्मन्त्रस्य तारके ॥
अक्षोभ्योऽस्य ऋषिः प्रोक्तो बृहतीच्छन्द एव च ।
बीजं लज्जा तु प्रोक्तं शक्तिः कूर्चमितीरितम् ॥
कीलकं निजबीजञ्च वधूबीजं सुसिद्धकम् ।
लक्षसंख्यं जपेन्मन्त्रं फलमूलैर्वने वसन् ॥
नक्तं ताम्बूलपूर्णास्यः शक्तिसङ्गकुले रतः ॥
तत्र शिवेन ब्रह्मानन्दरसं प्रपञ्चितम् ।
नीलपद्मैश्च जुहुयान्मधुरेण त्रयेण च ।
आद्यामन्त्रे तद्वदे च सर्ववर्णेष्वयं विधिः ॥
उग्रताराम्मनौ वक्ष्ये विधिरेष न संशयः ।

मन्त्रद्वयञ्च तद्भेदे पुरश्चरणकर्मसु ॥
नीलवाणी नीलकल्पे मन्त्रभेदसमन्विते ।
लक्षद्वयं जपेन्मन्त्रं तदा सिद्धिरनुत्तमा ॥
सर्वतारासु विद्यासु पुरश्चरणकर्मसु ।
जुहुयान्नीलपद्मैश्च बिल्वपत्रैरभावतः ॥
ऋषिश्छन्दस्तथा बीजं शक्तिं कीलकमेव च ।
सर्वथैव पृथक् विद्धि नाममन्त्रविभेदतः ॥
जपमन्त्रे च तारायाः साधने शक्तिजं कुलम् ।
घोरभावरहस्योक्तं त्यक्त्वा साकारमाप्नुयात् ॥
एतासां निगमागमप्रचलितं संगृह्य शैवं मतम्
तारायाः परिपूजनं जपविधिं बीजं तथा तर्पणम् ।
ग्रन्थेऽस्मिन् विनिवेशितं खलु मया संधृत्य तारावचः
यस्याग्रे कमला कृताञ्जलिपरा वीणाधरा शारदा ॥

इति श्रीपरमहंसपरिव्राजकाचार्य्य ब्रह्मानन्दगिरितीर्थ-
स्वामिकुलावधूतरचिते तारारहस्ये हरगौरी-
संवादे प्रथमपटले सन्ध्यादिपटलः ।

---

## अथ द्वितीयः पटलः ।

तारानिगमादौ कामाख्यामूले च—
कालीतारामन्त्रदाने चक्रचिन्तां करोति यः ।
आयुर्विद्यामोक्षबाधः शूली विष्ठाकृमिर्भवेत् ॥
यदि भाग्यवशान्नाथ ! ताराविद्या प्रलभ्यते ।
इच्छासिद्धिर्भवेत्तस्य किं मोक्षयाष्टसिद्धये ॥
यदि मन्त्रे गुरुः साक्षात् सर्वतन्त्रे स्वयं हरः ।
न दद्यात् तारकां विद्यां दातुं नैव वदेत् क्वचित् ॥

यदि भाग्यवशाद्देवि ! कोटिजन्मतपोबलात् ।
लभेत तारकां विद्यां स भवेत् कल्पपादपः ॥
गोपनीयो गोपनीयस्तारामन्त्रः सदाशिव ! ।
यन्त्रं मन्त्रञ्च पटलं स्तोत्रं कवचमेव च ॥
रहस्यं गुह्यपीठाद्य तागानिगममेव च ।
गोपनीयं प्रयत्नेन तारां नैव प्रकाशयेत् ॥
कुलकर्मरतो यस्तु सत्त्वभावविवर्जितः ।
मन्त्रे तन्त्रे गुरौ विप्रे लतायां वीरभावतः ॥
एतादृशाय कौलाय शठाय न कदाचन ।
यो ददाति वरं तस्मै दातारश्च शिवाज्ञया ।
धर्मलोभी कामलोभी कर्मलोभी नरः क्वचित् ॥
ददाति यदि देवेशि ! निरये पतति ध्रुवम् ।
शिवहा विष्णुलोकेषु शक्तिहा ब्रह्महा भवेत् ॥
स एव भ्रष्टः कौलेषु कौलो भ्रष्टो महीतले ।
कुलीनाय महेच्छाय यथाभक्तिपराय च ॥
कौलसेवायुतायापि शक्तिसेवारताय च ।
ताराभक्ताय शिष्टाय सदानन्दाय शूलधृक् ! ।
एतेभ्यश्च प्रदातव्यं ह्यन्यथा मृत्युमाप्नुयात् ॥
सद्गुरुं लक्षणाक्रान्तं स्वयं लक्षणसंयुतः ।
प्राप्य दीक्षां प्रकर्तव्या ह्यन्यथा निष्फला क्रिया ॥
बिल्वमूले श्मशाने वा पर्वते वा नदीतटे ।
गुरुगेहे महापीठे सिद्धपीठे शिवालये ॥
एकलिङ्गे तडागे वा ह्यपशून्यशिवालये ।
दीक्षां कुर्यात् सदा मन्त्री जपञ्चापि समाचरेत् ॥
पञ्चक्रोशान्तरे यत्र न लिङ्गान्तरमीक्ष्यते ।
तत्रैकलिङ्गमाख्यातं मन्त्रसिद्धिप्रदायकम् ॥

यदि भाग्यवशाद्देवि ! गङ्गातीरं प्रलभ्यते।
तत्र चेत् क्रियते दीक्षा कोटि कोटि गुणायते॥
यतेर्दीक्षां पितुर्दीक्षां दीक्षां मातामहस्य च।
सोदरस्य कनिष्ठस्य वैरिपक्षाश्रितस्य च॥
विविक्ताश्रमिणो दीक्षां न गृह्णीयात् कदाचन॥
न पत्नीं दीक्षयेद्भर्त्ता न पिता दीक्षयेत् सुताम्।
न पुत्रञ्च तथा ज्येष्ठो कनिष्ठं न च दीक्षयेत्॥
दीक्षादतीयदिवसे कृत्वा क्षौरादिकं शुभम्।
हविष्यं तद्दिने कार्य्यमुपवासं परेऽहनि॥
गुरोराज्ञां समादाय पुष्पादि स्वयमाहरेत्।
पञ्च घटांश्च संस्थाप्य तत्र देवान् प्रपूजयेत्॥
प्रथमे गणनाथञ्च द्वितीये च सदाशिवम्।
तृतीये सुन्दरीं देवीं चतुर्थे परदेवताम्॥
पञ्चमे सर्व्वदेवांश्च सर्व्वजिद्गुरुसत्तमः।
स्वस्ति वाच्य ततः कुर्य्यात् सङ्कल्पं विधिपूर्व्वकम्॥
मुक्तामाणिक्यवैदूर्य्यं गोमेदान् वज्रविद्रुमौ।
नीलं मरकतं पद्मरागं पञ्चघटे न्यसेत्॥
ततो मूलं सहस्रञ्च प्रजपेत् सद्गुरुः स्वयम्।
करन्यासं ततः कृत्वा तत्त्वन्यासं ततःपरम्॥
पुष्पाद्यलङ्कृतं शिष्यं चन्दनेन प्रलेपयेत्।
ततो रत्नादिकुम्भस्थैस्तोयैः शिष्यं प्रसिच्य च॥
शिष्यशीर्षे ततो हस्तं दत्त्वा चाष्टोत्तरं शतम्।
जपेन्मन्त्रं गुरुश्रेष्ठः कपोले मूलमुच्चरन्॥
ऋषिच्छन्दः कीलकञ्च शक्तिबीजमतःपरम्।
एकदा दक्षिणे कर्णे गायत्रीञ्च त्रिधा जपेत्॥
ततो मन्त्रं प्रवक्तव्यं स्त्रीदीक्षा वामतः सकृत्।

विधिरेष द्विजातीनां स्त्रीशूद्राणाञ्च वामत: ॥
ततश्च प्रणमेद्देवि ! श्रीगुरुं सर्वलक्षणम् ।
स्वयं जप्त्वा ततो मन्त्रं दक्षिणादीन् समाचरेत् ॥
तारामन्त्रेषु सर्वेषु चैषा दीक्षा प्रकीर्त्तिता ।
शिवस्य पूजनं कार्य्यं पार्थिवस्य न चान्यथा ॥
सामान्यार्घ्यं प्रकर्त्तव्यमासनादीन् विशेषत: ।
योनिपीठाद्विष्णुपीठं लिङ्गमात्तुल्यमूलकम् ।
योन्यध:शेषपर्य्यन्तं विमूर्त्तीकरणमिदम् ॥
न पूजयेत् पार्थिवं य: शिवलिङ्गं सुरेश्वरि ! ।
नान्यपूजाफलं तस्य चण्डालत्वं प्रजायते ॥
देवध्यानं तत: कृत्वा पुष्पं शीर्षे प्रदापयेत् ।
प्रणवस्य च पाशस्य कलासंख्यकजापत: ॥
विश्वं देहं शोधयित्वा भूतशुद्धिं समाचरेत् ।
स्वनाभौ दक्षिणं पाणिं वामे पाणौ विधाय च ।
चतुर्विंशतितत्त्वेन सार्द्धं जीवस्य तोलनम् ॥
प्रदीपकलिकाकारं सर्वतेजोमयं विभुम् ।
प्रविभिद्याखिलं चक्रं परब्रह्मणि योजयेत् ॥
मूलाधाराग्निशिखया सर्वं देहं विदाहयेत् ।
सर्वरूपं शरीरस्थं पापेन पुरुषेण च ॥
दक्षनासापुटं धृत्वा कलासंख्यं जपेच्च य: ।
पूरयित्वा ततो वायुं चतुष्षष्टिजपेन च ॥
कुम्भयेत् परमं वायुं ततो द्वात्रिंशतं जपेत् ॥
रेचयेद्वामतो वायुं लिङ्गदेहं विनाशयेत् ॥
वह्निबीजं जपेद्देवि ! पूर्वसंख्यानुसारत: ।
सर्वं भस्ममयं ध्यात्वा ततो भस्मविरेचनम् ॥
पृथ्वीबीजं ततो जप्त्वा कलया प्लावयेत्तनुम् ।

महाविष्णुः स्वयं साक्षादित्येवं ज्ञानसंकुलः॥
पुनश्च चन्द्रबीजेन चतुःषष्टिजपेन च।
स्थिरीकृत्य निजं देहं कुम्भयेद्वायुमण्डलम्॥
द्वात्रिंशद्वारुणजपाद्वह्निना विरेचयेत्।
साधयेत् परया भक्त्या दिव्यरूपं मनोहरम्॥
भाले चन्द्रस्य संभाव्य विभूतिं परिधारयेत्।
वामहस्ते समानीय पयश्च शुद्धभस्मकम्॥
यत्नभस्मसमायोगं तुषभस्मानि कारयेत्॥
प्रजपेत्तत्र मन्त्रञ्च शिवस्यापि षडक्षरम्।
शूद्रः पञ्चाक्षरं जप्त्वा प्रिये! षोडशसंख्यकम्॥
पठेत्तत्र महादेवि! मन्त्रमेतद्वयं पुनः॥

ओं अग्निरिति भस्मजलमिति भस्म सर्वहरं परम्। भस्म मे चक्षुपोन्द्रियाणि भस्मानि दध्यात् शाम्भवं पशुपाशविमोक्षणाय।

ओं भस्मरूपं परब्रह्म परा शक्तिरितीरिता।
भस्म श्रेयं परं ज्ञानं परं तत्त्वस्वरूपकम्॥
परमानन्ददं भस्म ज्ञानकल्पे व्यवस्थितम्।
विधारयामि तद्भस्म पशुपाशविमुक्तये॥
एतच्च ब्राह्मणे गद्यं मन्त्रं तस्य षडक्षरम्।
शूद्रः पञ्चाक्षरं मन्त्रं पठित्वा धारयेत् सदा॥
मृगमुद्रां समासाद्य ललाटे विन्दयाच्छुभम्।
मूलेन प्रणवेनापि प्राणायामं समाचरेत्॥
कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम्।
प्राणायामः स विज्ञेयः पूरकैः कुम्भरेचकैः॥
कलाचतुष्टयं तस्य द्विगुणेन विरेचयेत्।
क्रमात् क्रमात् लयं कृत्वा मानसेनापि पूजयेत्॥

ज्ञानिनामपि सिद्धिः स्यान्न्यासमेतत् समाचरेत् ।
पशुपतये नमः शीर्षे, मुखे च हरये नमः ॥
कण्ठे श्रीनीलकण्ठाय रुद्राय चोरसि न्यसेत् ।
कपाले धूम्रनेत्राय मूले श्रीगणवे नमः ॥
पादयोर्भैरवायैव शिवाय दक्षबाहुतः ।
कालाय वामबाहौ च पृष्ठे ईशानाय एव च ॥
क्रोधाय सर्वगात्रेषु विन्यसेच्छिवपूजने ।
षड्दीर्घभाजा बीजेन कुर्य्यादथ षडङ्गकम् ॥
कराङ्गञ्च तथा न्यस्य दशदिग्बन्धनञ्चरेत् ॥
हराय नम उच्चार्य्य मृदञ्चैवाहरेत् शुचिः ॥
महेश्वरचतुर्थ्यन्तं नमोऽन्तं गठनञ्चरेत् ।
शूलपाणे इहोच्चार्य्य सुप्रतिष्ठो भव स्वयम् ॥
प्रतिष्ठाप्य ततः सिद्धे दत्त्वावाह्य प्रपूजयेत् ॥
पाद्यमर्घ्यञ्च गन्धञ्च पुष्पं धूपञ्च दीपकम् ।
नैवेद्यादीनि दत्त्वा च पूजयेत् परमेश्वरम् ॥
मोचाफलं सहस्रञ्च शिवलिङ्गे ददाति यः ।
तस्य पूजां महादेवि ! गृह्णामि प्रयतात्मनः ॥
तस्य सिद्धिर्भवेद्देवि ! नियता सफला सदा ॥
पुरःस्थित्वा मूलमन्त्रं जपेदष्टसहस्रकम् ।
पशुपतये नम इति लिङ्गं संस्थापयेद् बुधः ।
बिल्वपत्रस्य माहात्म्यं वक्तुं कः शक्त एव हि ।
बिल्वपत्रैर्विना देवि ! लिङ्गपूजा तु निष्फला ॥
पूजयेत् परया भक्त्या चाष्टमूर्त्तिं शिवस्य च ।
आग्नेय्यान्तां प्रपूज्याथ वेद्यां लिङ्गे शिवं यजेत् ॥
लिङ्गवेदी भवेद्देवी लिङ्गं साक्षान्महेश्वरः ।
तयोश्च पूजनात् स्यातां देवीदेवौ सुपूजितौ ॥

ओँ सर्वाय चितिमूर्त्तये नमः, ओँ भवाय जलमूर्त्तये नमः, ओँ रुद्राय अग्निमूर्त्तये नमः, ओँ उग्राय वायुमूर्त्तये नमः, ओँ भीमाय आकाशमूर्त्तये नमः, ओँ पशुपतये यजमानमूर्त्तये नमः, ओँ महादेवाय सोममूर्त्तये नमः, ओँ ईशानाय सूर्य्यमूर्त्तये नमः। इत्यनेनाष्टमूर्त्तीः पूजयेत्।

पुष्पाञ्जलित्रयं देवि! शङ्कराय निवेदयेत्।
स पूजाफलमाप्नोति नान्यथा लक्षपूजनात्॥
ततो मूलं प्रजप्तव्यं देवि! चाष्टोत्तरं शतम्।
सजलैर्बिल्वपत्रैश्च जपन् लिङ्गे समर्पयेत्॥
ओँ गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे देव! त्वत्प्रसादान्महेश्वर!॥
महेश्वर इत्यत्र त्वयि स्थिते इति क्वचित् पाठः।

स्तोत्रञ्च लिङ्गार्चनचन्द्रिकादावनुसन्धेयं वक्ष्यते च। ततो मुखवाद्यादिकञ्चरेत्।

संपूज्य पार्थिवं लिङ्गं मुखवाद्यं चरेत्तु यः।
शिवसायुज्यमाप्नोति तथा करतलध्वनिम्॥
अर्द्ध प्रदक्षिणं कृत्वा प्रणमेत् पार्वतीश्वरम्।
याम्याच्च गच्छेत् कौवेरीं पुनस्तत्रातिष्ठरेत्॥
पृष्ठे हस्तं समादाय मन्नां जानुद्वयं तथा।
शीर्षावनामं दत्त्वा तु चार्द्धचन्द्राकृतिर्भवेत्॥
यो दद्यात् सम्विदापात्रं शङ्कराय महेश्वरि!।
अश्वमेधकृतं पुण्यं पात्रे पात्रे भवेत् सदा।
द्वादश्यां शाङ्करं देवि! लिङ्गं दृष्ट्वा तु पार्थिवम्।
सम्विदापात्रमादाय सर्वं दद्यात् कृताञ्जलिः॥
नार्चयेच्छङ्करस्यापि लिङ्गं यस्तु नरः क्वचित्।
न विष्णुभक्तः शाक्तो वा न शैवः स नराधमः॥

नृत्यगीतवाद्यनामोच्चारणेन शिवं सन्तोष्य संहारमुद्रया गच्छेति विसृज्य स्थानं सम्कुर्यात् ।

हरस्य पार्थिवं लिङ्गं पूजयित्वा नरो यदि ।
जले संस्थापयेद्देवि । स दरिद्रो भवेद् ध्रुवम् ॥
पूजयित्वा तु यो लिङ्गं पार्थिवोऽप्रियमुत्तमम् ।
स्थापयेद्धि रौद्रे च रुद्रगृहं प्रयाति सः ॥
शिवलिङ्गं पूजयित्वा भूमौ संस्थापयेत् क्वचित् ।
अथवा स्थापयेत्तोये रुद्रगृहं व्रजेन्नरः ॥

यत्र यत्र नरकश्रुतिस्तत् सुधीभिर्न कार्यम् । दरिद्राभिभवश्च न कार्यम् । किन्तु महालिङ्गेश्वरतन्त्रे उभयत्र दोषश्रवणात् । रुद्रगृहं व्रजेन्नरः इति श्रवणाच्च । भूमौ प्रायेणैव कार्यं तदभावे जले वा क्षिपेत् । गङ्गां भागीरथीजलं विना न जले कूपोदके पूजयेत् ।

न जले पूजयेत्कुम्भं भागीरथीजलं विना । इति यामले ।

त्रिपुरानन्देन मद्गुरुणा व्याख्यातम् । पूजनं गङ्गाजले विल्वपत्रादिभिर्विनापि न च सामान्यजले । जले सामान्यजले न स्थापयेत् । मुद्रादर्शनादिभिर्न पूजयेदित्यर्थः । तथा तारानिगमे महालिङ्गेश्वरतन्त्रे च ।

पार्थिवं नार्चयित्वा तु कालीं ताराञ्च सुन्दरीम् ।
यर्चयेद् यस्त्रिलोकस्थः स गच्छेद्यमयातनाम् ॥

एतेनादौ महाविद्यां पूजयित्वा शिवपूजां वदन्ति, तत्र लिङ्गार्चनचन्द्रिकायाम् ।

महाविद्यां पूजयित्वा शिवपूजां समाचरेत् ।
अन्यथाकरणाद्देवि । न पूजाफलमाप्नुयात् ॥

इति महाविद्यानां प्रथमार्थे शिववाक्यम् । तथाच त्रिपुराकल्पे ।

यावन्न पूजयेल्लिङ्गं पार्थिवं साधकाधमः ।

तस्य पूजां न गृह्णाति सुन्दरी तारकामिता ॥
इति ब्रह्मानन्दपरमहंसपरिव्राजकाचार्य्यतीर्थावधूतविरचिते
तारारहस्ये द्वितीये पटले शिवलिङ्गपूजनपटलः ।

---

शक्तिसारे—

प्रातःकृत्यं चरेदादौ प्रातःसन्ध्यां ततःपरम् ।
ततः स्नानं विधायाथ सन्ध्यां माध्याह्निकीं तथा ॥
शिवपूजां ततः कुर्य्यात् तथान्तर्यजनं शिव ! ।
ततः पूजा विधातव्या ततो होमं समाचरेत् ॥
बलिं दद्यात्ततो देव्यै होमं कुर्य्यात्ततःपरम् ।
भोगं दत्त्वा महादेव्यै सायंसन्ध्यां समाचरेत् ॥
ततो योगो विधातव्यस्ततः साधनमुत्तमम् ।
एवं प्रकारमासाद्य तारकां साधयेद् यदि ॥
तदा सिद्धिमवाप्नोति नान्यथा कल्पकोटिभिः ॥
स्तवञ्च कवचञ्चापि सहस्राख्यं पठेत्ततः ।
प्रपठेत् साधकश्रेष्ठस्त्रिसन्ध्यं कार्य्यसिद्धये ॥
एतेन शिवपूजान्तर्यजनस्य कर्त्तव्यत्वं तदेव लिख्यते ।
तारासारे निगमे च—
न पूजाफलमाप्नोति विनान्तर्यजनं शिव ! ।
तस्मादर्चनतः पूर्वमन्तर्यागं समाचरेत् ॥

तथाचैकजटाकल्पे—

स्वकीयहृदये ध्यायेत् सुधासागरमुत्तमम् ।
रत्नद्वीपञ्च तन्मध्ये सुवर्णवालुकामयम् ॥
पारिजातवनं तत्र रत्नानाञ्चापि मन्दिरम् ।
श्मशानं तत्र संचिन्त्य तत्र कल्पद्रुमं स्मरेत् ॥
तन्मध्ये मणिपीठञ्च नानामणिविभूषितम् ।

चतुर्दिक्षु शवैर्मुण्डैश्चिताङ्गाराग्निभूषितम् ॥
विभाव्य यत्नतो मन्त्री तत्तद्वीपे वसेत् स्वयम् ।
ब्रह्मरन्ध्रे सदा ध्यायेन्महादेवं जगद्गुरुम् ॥
तस्य वामस्थितां देवीं तारां तारस्वरूपिणीम् ।
विभाव्य प्रणमेद्विद्यां मातःकर्तरितीरिता ॥
ब्रह्मरन्ध्रे बिन्दुरूपं पुष्करं तीर्थमुत्तमम् ।
प्रकुर्य्यात् साधकस्तत्र स्नानं सर्वमलापहम् ॥
वधूवीजस्वरूपे च शिवतीर्थे हृदि न्यसेत् ।
मध्ये सुषुम्नानाड्यां तु स्नायात् साधकसत्तमः ॥

इति स्नानम् ।

स्वकीयहृदये ध्यायेत् सिंहासनमनन्यधीः ।
तत्र संभाव्यते शय्या ज्ञानानन्दस्वरूपिणी ॥
शिवं तत्र विभाव्याथ सर्वालङ्कारभूषितम् ।
दिगम्बरं महाकायमुन्मत्तं कामभावतः ॥
शय्यायामूर्द्धं लिङ्गञ्च भावयेत् साधकाग्रणीः ।
भावयेच्च ततो देवीमन्तानन्दरूपिणीम् ॥
तप्तकाञ्चनवर्णाभां नानालङ्कारभूषिताम् ।
पारिजातान्वितां देव्याः कवरीं परिभावयेत् ॥
त्रिसन्ध्यं मन्ध्या कर्त्तव्या मन्त्रसिद्धिमभीप्सता ।
माता कामेश्वरी देवी पिता कामेश्वरः शिवः ।
अहरहान् भावयित्वा च अष्टसिद्धीश्वरो भवेत् ॥

इति सन्ध्या ।

सर्वतेजोमयीं देवीं शिवशक्तिं यतात्मिकाम् ।
ज्वलत्सूर्य्याग्निचन्द्राभां तडित्कोटिसमप्रभाम् ॥
भावयेत् साधको यस्तु ध्यानयोगेन निश्चलः ।
इति ध्यानं विधातव्यं साधकैर्मन्त्रसिद्धये ॥ इति ध्यानम् ।

ब्रह्मरन्ध्रचन्द्रपात्रात्तर्पयेत्तारिणीं पराम्।
तत्रस्थसूर्यपात्रेण चार्घ्यं दद्यान्मनोहरम्॥
दया ज्ञानं क्षमा पुष्पं पुष्पमिन्द्रियनिग्रहम्।
ज्ञानदानं पुष्पपुष्पमहिंसापुष्पमुत्तमम्॥
आचारपुष्पं मे देवि! स्वयम्भूपुष्पमुत्तमम्।
आनन्दपुष्पं दातव्यं पुष्पञ्च साधकार्चनम्॥
इत्थपुष्पं यः प्रदद्यात् स गच्छेत्तारकापदम्।
त्रिलोकस्थशुभद्रव्यैः पूजयेत् साधकोत्तमः॥
तत्त्वं दद्यात्तारकायै मत्स्यमांससमन्वितम्।
तदा सिद्धिमवाप्नोति न जपाच्च कुलार्चनात्॥ इति पूजा
प्रजपेदर्णमालाभिर्न्यासपूर्वं कुलेश्वरः।
कुलमध्ये षोडशारस्थे विन्यसेत् षोड़शस्वरम्॥
पूर्वादितः समारभ्य वह्निकोणान्तपत्रतः।
आधारे विन्यसेद्विद्वान् ककारादिचतुष्टयम्॥
पश्चिमादिदले न्यस्य चोत्तरान्तं सुसाधकः।
लिङ्गमूले न्यसेत् पद्मे षड्दले चोत्तरक्रमात्॥
डकारादिफकारान्तं षड्वर्णं साधकोत्तमः।
नाभिमूले न्यसेद्वर्णं टादिठान्तं मनोहरम्॥
दक्षिणादिक्रमाद्यस्य वर्णरूपान्महामनून्।
विन्यसेत्तालुमूले च चतुर्दशदलान्विते॥
धकारादिसकारान्तमिन्द्रवर्णं न्यसेद्बुधः।
ललाटे च भ्रुवोर्मध्ये हक्षौ वर्णौ न्यसेत् सदा॥
आदौ दले तथा वामे शुक्लपत्रे सुनिश्चितम्।
द्वादशार्णं न्यसेद्विद्वान् कादिठान्तान् सुसिद्धये॥
डकारादिविसर्गान्तान् सहस्रारे न्यसेत् सदा।
एवञ्चान्तर्मातृकाणां विना न्यासेन पार्वति!॥

अन्तःपूजां चरेद्यस्तु स गच्छेत् यमसादनम् ॥

इति मातृकान्तर्न्यासं कृत्वा वर्णमालया जपेत् ।

अकारादिक्षकारान्तं हक्षवर्णौ च मध्यतः ।
नादबिन्दुसमायुक्तं वर्णान्ते प्रजपेन्मनुम् ॥
अनुलोमविलोमेन जपेदष्टोत्तर शतम् ।
अ कु चु टु तु पु यु श अष्टवर्गेषु संजपेत् ॥

अ अवर्गः षोडशस्वरवर्णः । कु कवर्गः, चु चवर्गः, टु टवर्गः तु तवर्गः, पु पवर्गः, यु यवर्गश्चतुर्वर्णः, श शवर्गः चतुर्वर्णः । तारार्णवे—

नादबिन्दुसमोपेतं सर्ववर्णं व्यवस्थितम् ।
स्त्रीशूद्रयोरेतदेव नादबिन्दुविवर्जितम् ॥
नादबिन्दुसमायुक्तं जप्ये न्यासे च मोक्षदम् ॥

एतेन मोक्षार्थिनां सर्ववर्णानामर्धचन्द्रखण्डभूषितवर्ण-जपे न्यासे चाधिकारः । स्त्रीशूद्रयोस्तु विसर्गाकारबिन्दूनां न चन्द्रखण्डयोगः । तथा च तारासारे ।

निरर्धेन्दुं न चरेद्वर्णं जपे न्यासे च शूद्रकः ।
अन्यथाकरणान्मूढो नरके याति निश्चितम् ॥
स्वकीयहृदये ध्यायेद् योनिमण्डलमुत्तमम् ।
राजभिश्च समोपेतं त्रिकोणं सर्ववर्णकम् ॥
कामाख्यायोनिं संभाव्य नीलपद्ममनुस्मरन् ।
हुनेत् षोडशधारेषु घृतैर्निर्लोभमेधया ॥
ततः प्रदक्षिणं कुर्यान्मानसेन शिवां नयम् ।
इत्यन्तर्यजनं मूढोऽकृत्वा यः पूजयेत् पराम् ।
न पूजाफलमाप्नोति तारायाः कोटिजन्मतः ॥

इत्यन्तर्यजनम् ।

अथोग्रतारान्तर्यागः ।

अथोग्रतारकायाश्च अन्तर्यागं वदाम्यहम् ।
स्वकीये हृदये ध्यायेत् सुधासागरमुत्तमम् ॥
हृत्पद्मे षोड़शारे च तर्पयेदुग्रतारिणीम् ।
दले दले महादेवीं मूलमन्त्रमनुस्मरन् ॥
तस्या योनौ हुनेद्वत्स ! मन्त्रेणानेन साम्प्रतम् ।
ॐ नाभिचैतन्यरूपाग्नौ हविषा मनसा स्रुचा ॥
सुषुम्नावर्त्मना नित्यमक्षवृत्तिर्जुहोम्यहम् ।
प्रकाशकाशहस्ताभ्यामवलम्ब्योन्मना स्रुचा ॥
धर्माधर्मकलाज्यपूर्णवह्नौ जुहोम्यहम् ॥
ततश्च वर्णमालाभिर्जपेदष्टोत्तरं शतम् ।
प्रदक्षिणीकृत्य ततः प्रणिपत्य सुखञ्चरेत् ॥

इत्युग्रतारान्तर्यजनम् ।

स्वकीये हृदये ध्यायेत् सारदां नीलरूपिणीम् ।
प्रत्यालीढ़पदां देवीं व्याघ्रचर्मावृतां कटौ ॥
हास्यवक्त्रां महाघोरां यजेन्नीलसरस्वतीम् ।
विपरीतरताशक्तां वाग्मित्वप्रदायिनीम् ।
पाययित्वा सुधाधारं मत्स्यमांससमन्विताम् ।
चषकेन ददेद्वक्त्रे चासवं मांससंयुतम् ॥
महाहृदि परं ध्यायेन्नीलवाणीं सुरेश्वरीम् ।
आसवोन्मत्तहृदया शिववक्त्रे पुनः पुनः ॥
पपात मातयोगेन चुम्बनञ्च करोति हि ।
पादपद्मं महादेवि ! विहृत्य त्रिजहस्ततः ॥
उत्थाय तारिणीवक्त्रं स चुम्बति पुनः पुनः ।
तस्य वक्त्रे प्रदद्याच्च मत्स्यं दग्धं महासवम् ॥
दुग्धमत्स्यं दग्धमांसं शोणितं पशुदेहतः ।

शूकरस्योष्ठमांसञ्च भगलिङ्गामृतं तथा ।
दद्यान्नीलसरस्वत्यै चोच्छिष्टं हरवल्लभे ।
पुनः पुनः पूजयित्वा पूजयेद्वर्णमालया ॥
इत्यन्तर्यजनं प्रोक्तं नीलवाण्याः सुशोभनम् ।
योऽर्चयेत् परया भक्त्या हस्ते तस्य सदा वसेत् ।
सर्वसिद्धिर्महादेवि ! वक्त्रे वाणी वसेत् ध्रुवम् ।
दिवारात्रौ कुलाचारे चैवं यस्तु विभावयेत् ।
तस्य भोगश्च मोक्षश्च वाञ्छासिद्धिः करे वसेत् ॥

इति नीलसरस्वत्या अन्तर्यजनम् ।

अथ एकजटामन्त्रोद्धारः ।

ब्राह्मणेतरवर्णानां षट्कोणं कर्णिकागतम् ।
ब्राह्मणानां सदा लेख्यं त्रिकोणं कर्णिकागतम् ॥
मध्ये कूर्चं लिखेद्विद्वान् वृत्तद्वयमतःपरम् ।
ततश्चाष्टदलं लेख्यं चतुर्बीजसमन्वितम् ॥
पूर्वे लज्जा वधूर्दक्षे उत्तरे फः प्रकीर्त्तितः ।
पश्चिमे टं समाख्यातं कोणे च वेणुकायुतम् ॥
चतुरस्रं चतुर्द्वारं लिखेद्यन्त्रं सुशोभनम् ॥
एवं यन्त्रं परित्यज्य भिन्नयन्त्रे प्रपूजयेत् ।
तस्मै दत्त्वा वरं श्रापं देवी याति हरं प्रति ।
अस्या भेदेन तारायाः वक्ष्यामि तदनन्तरम् ।
त्रिकोणञ्च त्रिवृत्तञ्च लिखेच्चापि चतुर्दलम् ॥
ततश्चाष्टदलं लेख्यं द्विवृत्तं तदनन्तरम् ।
चतुरस्रं चतुर्द्वारं कामताराप्रपूजने ।

एतासां धारणयन्त्रं यथा—

त्रिकोणं साधकाख्यञ्च षट्कोणं तदनन्तरम् ।
लिखेदष्टदलं पद्मं षोडशस्वरसंयुतम् ॥

पश्चाद्वृत्तत्रयं सम्यक् समवर्णेन वेष्टयेत्।
चतुरस्रं चतुर्द्वारं कोणे वज्रसमन्वितम्। इति।

अथोग्रतारायन्त्रम्।

नवकोणं लिखेदादौ पञ्चपत्रसमन्वितम्।
द्विवृत्तं द्विगुणं पद्मं सर्वत्र रेणुभूषितम्॥
चतुरस्रं चतुर्द्वारमुग्रतारार्चपूजने।
षट्कोणञ्च चतुष्कोणं पञ्चवृत्तसमन्वितम्॥
लिखेदष्टदलं पद्मं चतुरस्रादिकं तथा।
वर्तुलं विन्दुसंयुक्तं षट्कोणं तदनन्तरम्।
लिखेदष्टदलं पद्मं भूगृहं तदनन्तरम्॥

अथ नीलतारिणीयन्त्रम्।

त्रित्रिकोणं समं लेख्यं मध्ये विन्दुसमन्वितम्।
द्विवृत्तं षड्दलं विद्धि त्रिवृत्तं द्वादशं दलम्॥
पुनर्वृत्तत्रयं लेख्यं चतुर्द्वारात्मकं गृहम्।
द्वित्रिकोणञ्च षट्कोणं वृत्तं चाष्टदलं तथा॥
पुनर्वृत्तं कलापत्रं चतुर्द्वारात्मकं गृहम्।
साधारणयन्त्रमेकजटाप्रकरणोक्तं सर्वत्र इति नवयन्त्रोद्धारः।

अथ यन्त्रसंस्कारः।

तारानिगमे—

ताम्रपात्रे कपाले वा श्मशाने काष्ठनिर्मिते।
स्वर्णे रौप्येऽथवा लौहे यन्त्रं कुर्याद्विधानतः॥

संस्कारस्य नित्यतामाह तारासारे—

असंस्कृते तु ये यन्त्रे पूजयन्ति नराधमाः।
पुण्यप्रानसुतैर्हीनाः साधने सिद्धयः कथम्?॥
यन्त्रं लिखित्वा ये पूजां न कुर्वन्ति दिने दिने।
तेषां पूजां न गृह्णन्ति देवाः सिद्धिः कथं भवेत्?॥

तत्रैव । यन्त्रस्य लेखनेऽशक्तः पुष्ययन्त्रे प्रपूजयेत् ।
अपराह्यां जवायाश्च द्रोणे च करवीरके ॥
गौरीपट्टे शिवस्यापि तत्त्वधावेऽथवा पुनः ।
अभावे सर्वयन्त्राणां शालग्रामे जलेऽर्चयेत् ॥
सुमच्यां भर्ववर्णाय तद्यन्त्रे च प्रपूजयेत् ।
शालग्रामेतरे यन्त्रे मस्यते शूद्रयोषितः ॥
गौरीपट्टे तु पूजायां पाषाणादौ न पार्थिवे ॥

तथा शक्तियामले—

पार्थिवे योनिवेद्यास्तु पूजने रेणुनाशकृत् ।
पच्यते नरके घोरे न मोक्षः कोटिजन्मतः ॥ इति ॥
रक्तासनस्थितो धीरः कामाख्यासुख एव च ।
लिखेदष्टदलं पद्मं कुङ्कुमेन सुरक्तये ॥
तत्र संस्थापयेद्यन्त्रं पञ्चगव्येन सेचयेत् ।
मोक्षणं मूलमन्त्रेण अस्त्रेण पुष्पताडनम् ॥
मूलेन निक्षिपेद्बिन्दून् लेपयेच्चन्दनेन च ।
गन्धपुष्पाक्षतैर्यन्त्रं समभ्यर्च्य विलोकयेत् ॥
ओं यन्त्रराजाय विद्महे सर्वाधाराय धीमहि तन्नो यन्त्र प्रचोदयात् ।
एतया चापि गायत्र्या शतैस्तमभिमन्त्रयेत् ॥
देवतामावमाहाय मूलमन्त्रशतं जपेत् ।
प्रतिष्ठोक्तक्रमेणापि प्रतिष्ठाप्य निरीक्षयेत् ॥
गायत्र्या देवतायास्तु शतं समभिमन्त्रयेत् ।
देवीं तत्र समावाह्य दशमूलेन मन्त्रयेत् ॥
पुष्पाञ्जल्यष्टकं दत्त्वा षोपचारैः पूजयेत् ।
कलाभिर्दशभिर्वापि पञ्चभिर्वाप्यशक्तितः ॥
तर्पणन्तु ततः कृत्वा शतमष्टोत्तरं हुनेत् ।

हीमकर्मस्वशक्तश्चेद् द्विगुणं जपमाचरेत् ॥
प्रणम्य धार्य्यं तद्यन्त्र सदा सद्भावसिद्धये ।
गुरुणा कारयेद्वापि स्वयं वापि विशोधयेत् ॥
ब्राह्मणानां क्षत्रियाणां वैश्यानां हरसुन्दरि ! ।
योषितामपि शूद्राणां चाधिकारोऽत्र सन्निधौ ॥
सर्वत्र होमे पूजायां संस्कारे पालकस्य च ।
प्रयोगे यत्र संयुक्तो मन्त्रः संस्कारकर्मणि ।
श्मशानाच्च चितानाश्च लतानाश्चापि साधने ।
लज्जा तु प्रणवस्थाने ह्रीं वोजं वह्निवल्लभा ।
सेतुस्थाने कूर्च्चवोजं मोढायां कामवीजकम् ।
स्वर्गमोक्षप्रदं विद्धि सर्वत्र शूद्रयोषितः ॥
इति श्रीब्रह्मानन्दपरमहंसपरिव्राजकावधूतविरचिते
तारारहस्ये द्वितीय. पटले यन्त्रसंस्कारः ।

---

अथ मालाप्रकरणम् । ताराविनयमे—
नृकपालस्य खण्डेन रचिता जपमालिका ।
महाशङ्खमयी माला चक्रमात् सिद्धिदा स्मृता ॥
दन्तजैर्वा प्रकर्त्तव्या तथा चाङ्गुलिपर्वभिः ।
काली तारा महाविद्या यन्त्रे तिष्ठत्यतन्द्रिता ॥
अभावे स्फाटिकी माला महाशङ्खस्य शङ्कर ! ।
शोधयित्वा जपेन्मन्त्रं सर्वकामार्थसिद्धये ॥
महाशङ्खजपादस्य ! चक्रमात् सिद्धिभाग् भवेत् ।
मन्त्रसिद्धिः स्फाटिके स्याद्रुद्राचे सर्वसिद्धिभाक् ॥
कुशग्रन्थिः शान्तिके स्यात् खरदन्ता च मारणे ।
उच्चाटने चाश्वदन्ता वश्ये प्रवालमालिका ॥
विद्यायाञ्च धने चापि स्त्रियामाकर्षणे तथा ।

शवूर्णां स्तम्भने वापि माला रौप्यमयी तथा ॥

संस्कारे नित्यतामाह—

यथासंस्कृतमालाभिर्मन्त्रं जपति मानवः ।
तस्मै दत्त्वा रुषा शापं देवी याति हरं प्रति ॥
त्रिकोणं संलिखेद्भूमौ मालां तत्र निधापयेत् ।
देवप्रतिष्ठामन्त्रेण तत्र देवीं प्रतिष्ठयेत् ।
संस्नाप्य तत्त्वं तेनैव सहबिन्दुकं चिपेत् ॥
सिन्दूरकरवीराद्यैः पूजयेत्तारिणीं पराम् ।
तुलसीगोमयास्पृष्टां गङ्गास्पृष्टाश्च मालिकाम् ॥
गोपयेद्यत्नतो न गुरोरपि न दर्शयेत् ।
अपमृत्यु गतस्यापि चास्थि विप्रेतरस्य च ।
स्त्रीकर्णवेधे देवेशि चास्थि चादाय यत्नतः ।
धमन्या ग्रथयेन्मालां रक्तसूत्रेण वा पुनः ॥

इति महाशङ्खमाला ।

अथ सामान्यमाला ।

मारणे पञ्चदशकामष्टादश सदोषटे ।
अष्टाविंशतिमालाभिर्वश्येऽप्याकर्षणे तथा ॥
धनार्थे त्रिंशता जप्यं सिद्धौ स्यात् पञ्चविंशतिः ।
एकपञ्चाशदन्तुभिः सर्वसिद्धिमवाप्नुयात् ॥
ब्राह्मणी कन्यका या तु अनूढा स्यात् कलेवरे ।
तत्सूत्रेणैव कर्त्तव्यं स्रजं सर्वसुखावहम् ॥
शान्तौ कार्पासकसूत्रं स्यात् सिद्धौ स्याट्टसूत्रकम् ।
ज्ञानसूत्रं पर्णकर्णे शणसूत्रन्तु मारणे ॥
आकर्षणे नीलसूत्रं धमनी सर्वसिद्धिदा ।
त्रिगुणं त्रिगुणीकृत्य दृढरज्जुसमन्वितम् ॥
सार्द्धद्वयावेष्टनेन ग्रन्थिं कुर्याद्यथा दृढम् ।

ब्रह्मग्रन्थियुतां कुर्य्यादग्रन्थिं वापि विवेष्टिताम्॥
अथवा ग्रन्थिकं तत्र दृढ़रज्जुसमन्वितम्।
एषा पुष्पमयी माला सर्वसिद्धिप्रदा मता॥

अथ शोधनम्।

अश्वत्थपत्रनवकैः पद्माकारन्तु कारयेत्।
तन्मध्ये स्थापयेन्मालां मातृकामूलमुच्चरन्॥
क्षालयेत् पञ्चगव्येन वामदेवेन धर्षयेत्॥

वामदेवस्तु महाकुलार्णवे—ओं वामदेवाय सर्वसिद्धीश्वराय सर्वपापहराय सर्वमालिकेश्वराय श्रीं ह्रुं श्रीं ऐं ह्रां फट् इत्यनेन चन्दनकुङ्कुमगोरोचनादिभिर्घर्षयेत्।

तन्त्रार्थेन तु नेतव्यो वामदेवस्तु वैदिकः।
कुलाचारविहीनानां न वेदाः फलदायकाः॥
श्रीं लज्जा तु सुभगा चैव वाग्भवा काम एव च।
एतेन बोधनं कुर्य्यात्तारामन्त्रसुसिद्धये॥ इति बीजयेत्।

ततः शताभिमन्त्रितं मूलेन कुर्य्यात्। ततो मातृकावर्णैः प्रत्येकबिन्दुं निक्षिपेत् प्रतिमासु मूलेन देवीं तर्पयेत्।

मूलेन स्नापयेन्मालां कुङ्कुमेनापि लेपयेत्।
धर्षयेद्विधिबोधेन कामबीजेन पूजयेत्॥
ततश्च मूलमन्त्रं हि मालोपरि शतं जपेत्।
तत्र देवीं प्रतिष्ठोक्तविधिना प्रतिष्ठापयेत्॥

तत आवाहनमुद्राभिरावाहयेत्। ततः षोड़शोपचारैः पञ्चोपचारैर्वा पूजयेत्। तत अष्टोत्तरशतं जुहेत्। तदशक्तौ द्विगुणजपः। ततः ससम्पदक्षिणां कृत्वा आत्मसात् कृत्वा कराङ्गषड़ङ्गन्यासौ विन्यस्य मालां शिरसि संवेष्ट्य गोपयेत्।

मुखे मुखन्तु संयोज्य पुच्छे पुच्छं नियोजयेत्।
मुखतः प्रजपेन्मन्त्री पुच्छतो न कदाचन॥

पृच्छतः प्रजपित्वा तु शोकदुःखभयादिकम् ।
कृताञ्जलिर्यस्य देवी तस्यापि नरकं किल ॥
न सद्गतिर्न वै सिद्धिर्विघ्नस्तस्य सदा भवेत् ।
शब्दे जाते भवेद्रोगो धूननं बहुदुःखदम् ।
हेलनात् सिद्धिहानिः स्यात्तस्माद्यत्नपरो भवेत् ॥

इति मालासंस्कारः ।

अथ होमः ।

प्रागग्रा उदगग्राश्च तिस्रो रेखा विलेखयेत् ।
तन्मध्ये च चतुःकोष्ठं शेषं कुर्याद्विधानतः ॥
त्रिकोणमादौ लिख्याथ मध्ये लक्ष्मासमन्वितम् ।
वृत्तं ततश्च षट्कोणं कोणवस्त्रचतुष्टयम् ॥
गजकुम्भं वाह्यकोणे द्वारे योनिद्वयं द्वयम् ।
अष्टयोनियुतं चक्रं गजकुम्भचतुष्टयम् ॥
एवं कुण्डं स्थण्डिलं वा कृत्वा देवीं विभावयेत् ।
अग्नौ प्रपूजयेद्विष्णुं ऐशान्यां शूलधारिणम् ॥
वायव्यां चापि ब्रह्माणं नैर्ऋत्यामिन्द्रमेव च ।
लक्ष्मीं सरस्वतीं पूर्वं द्वे त्रिकोणे प्रपूजयेत् ॥
शचीं कृष्णां चोत्तरस्यां छायां गङ्गाञ्च पश्चिमे ।
दुर्गां देवीञ्च त्रिपुरां दक्षिणस्यां प्रपूजयेत् ॥
प्रागग्रेषु यजेद्देवान् मुकुन्देश पुरन्दरान् ।
यजेद् चोत्तराग्रेषु ब्रह्मावैवस्वतेन्दुकान् ॥
देवीं प्रपूजयेत् पश्चात् षट्कोणेषु सदाशिव ! ।
दुर्गां काञ्चीं तथा कालीं त्रिपुरां भैरवीं तथा ॥
असितां पूजयेत् कोणे तारिणीं मोक्षदायिनीम् ।
मध्ये प्रपूजयेद्वत्स ! यथायत्नपचारकैः ॥
देव्या योनिं विभाव्याथ भावयेच्च रजोयुताम् ।

पुष्पाञ्जलिद्वयं दत्त्वा काष्ठं तत्र निपातयेत् ॥
ततो वह्निं समानीय कांस्यपात्रे स्थितम् शुभम्।
ओं क्रव्यादेभ्यो हुं फट् स्वाहा इत्यनेन त्यजेद् धः ॥
पुनर्मूलेन चानीय योनिमध्ये निधापयेत्।
योनिमुद्रां प्रदर्श्याथ मूलं तत्र जपेद्‌द्यम् ॥
तत्र देवीं चिन्तयित्वा रजसा योनिमण्डलम्।
गन्धपुष्पेण संपूज्य देवीं सर्वार्थसाधिनीम् ॥

ॐ चित् पिङ्गल हन हन पच पच मथ मथ विध्वंसय विध्वंसय मम दुष्टान् पापान् सत्त्वान् शत्रून् ग्रस ग्रस पिब पिब मनेन होमेन सर्वाज्ञां ज्ञापय मम सर्वकार्य्याणि साधय स्वाहा इति पठित्वा वह्निं धापयेत्।

रजोगुणसमुद्भूतं रक्तवर्णं त्रिलोचनम्।
द्विभुजं सर्वपापघ्नं समिद्धं विश्वतोमुखम् ॥
नानालङ्कारसंयुक्तं बहुजिह्वासमन्वितम् ॥

एवं ध्यात्वा अग्ने त्वं वरदनामासि इति नाम कृत्वा वरदनामाग्ने इहागच्छ इह तिष्ठ तिष्ठ मम सर्वकर्माणि साधय स्वाहा। इत्यावाहयेत्। ततो मूलेन नमस्कुर्य्यात्। एवं आज्यस्यापि शुवस च। आज्यपात्रस्य दक्षिणभागादाज्यं गृहीत्वा मूलेन अग्नेर्दक्षिणनेत्रे जुहुयात्। तथा वामभागादाज्यं गृहीत्वा वामनेत्रे। मध्यतो मध्यनेत्रे। ततो महाव्याहृतिभिः ओं भूः स्वाहा। ओं भुवः स्वाहा। ओं स्वः स्वाहा। ओं भूर्भुवःस्वः स्वाहा। इति स्त्रीशूद्रयोर्विना। ततो मूलेन एकादशाहुतिं हुत्वा श्रीतारादेव्याः पीठदेवताभ्यः स्वाहा। ततः अघोभ्यत्‍र्पये। ततः काम्यकर्म चेत् सङ्कल्पा नित्यचेन्न तथा। त्रिमधुयुक्तेन प्रकृतहोमं समाप्य स्त्रीशूद्रेतरो महाव्याहृतिभिर्हुत्वा आवरणदेवताभ्यः अष्टाहुती-

हुत्वा वह्निं गन्धपुष्पमाल्यताम्बूलैरभ्यर्च्य श्रीसदाशिवं पूर्वं स्रुवाहुतित्रयं दत्त्वा मूलेन पूर्णाहुतिं दत्त्वा वह्निं प्रदक्षिणीकृत्य प्रणम्य काम्यदक्षिणादिः। तिलकन्तु मूलेन संहारमुद्रया क्षमस्वेति विसर्जयेत्। इति होमः ॥

यत्रास्ते कमला कृताञ्जलिपरा वीणाधरा सारदा
ताराचाप्यमनुस्मरन् प्रियतमं वामापदः कारणम्।
ब्रह्मानन्दकृतौ सुसाधनविधौ ताराहस्ये शुभे
दीक्षायाः पटलो द्वितीय इति संसिद्धिप्रदः सत्वरम् ॥

---

## अथ तृतीयः पटलः।

### अथ मन्त्रविकारणप्रायश्चित्तम्।

ताराणिगमे तारार्णवे च। अन्यासां व्यवस्था भ्यन्वैव।
कालोतारासु विद्यासु यदि स्यान्मन्त्रविभ्रमः।
तारापूजां ततः कृत्वा चैकलिङ्गे शिवालये ॥
कुशासनस्थितो वीरो जपेत् पद्मावतीमनुम्।
एकादशसहस्राणि ततो मन्त्रस्मृतिर्भवेत् ॥
कालोतारासु विद्यासु चक्रचिन्ता न विद्यते।
अरिदोषादिदोषाधैर्न लोको लिप्यते क्वचित् ॥
यदि भाग्यवशाद्देवि। तारामन्त्रं प्रलभ्यते।
ऋणिधन्यादिकं चक्रं न च तत परीक्षयेत् ॥
ताराविद्याचक्रमध्ये न कदाचिद्दतो भवेत्।
महाचीनक्रमं प्राप्य सर्वम्येव फलो भवेत् ॥
तस्माद्देव्याश्च तारायाः प्राणान्तेऽपि च साधकः।
साधने पूजने चापि महाचीनं त्यजेन्न च ॥
महाचीनं महानीलं न साधयति यो नरः।

न तस्य साधने शक्तिः कुत्रोपाये मह्रीयते ॥
वामाचारं परित्यज्य पूजनं वा जपं चरेत्।
स गच्छेन्नरकं घोरं यावदिन्द्राश्चतुर्दश ॥
वामाचारं विना देवि ! तारायाः परिपूजनम्।
योजाय मरणायेह परे च नरकाय च ॥
न पूजा न जपो यस्य न सन्ध्या न च तर्पणम्।
महाचीनक्रमं कृत्वा स गच्छेत्तारकापदम् ॥
पञ्चतत्त्वं विना देवि ! ब्राह्मणः शूद्रतामियात्।
पञ्चतत्त्वयुतो देवि ! शूद्रोऽपि विप्रतां व्रजेत् ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैवान्त्यजास्तथा।
महाचीनक्रमं कृत्वा शिवः साक्षाद्भवेत् स्वयम् ॥
कौलं दृष्ट्वा यदा कौलस्तस्य पूजां न कारयेत्।
चक्रे स्थिताश्चयथा मन्त्री लतायोगं समाचरेत् ॥
मध्ये चक्रे स्थितः कौलः शक्तिश्च साधकाय च।
दातुं नैव समर्थश्चेत् स्वयं नेतुं प्रवर्त्तते ॥
अथवा दिवसं प्राप्य कुलपूजां चरेच्च च।
साधकानपि शक्तिश्च स्वेच्छाचारेण तोषयेत् ॥
प्रसन्नमनसा वापि सत्कौलाय प्रदीयते।
स्वयं स्वीयकुलैः सार्द्धं क्रियते च कुलक्रिया ॥
तस्य यन्त्रञ्च मालां च पूजापद्धतिरेव च।
धारितं कवचं तस्य छीयते योगिनीगणैः ॥
वह्निना दह्यते वापि जले वापि प्रलीयते।
चौरैर्वा नीयते किञ्चित् किञ्चिद्वा योगिनीगणैः ॥
एवञ्चेज्जायते वत्स ! यन्त्रादिहरणे शिव ! ।
पञ्च कौलान् समानीय कुमारीश्च विशेषतः ॥
गन्धाद्यैरेव संपूज्य वन्दयेच्छिरसा नतः।

होमं कुर्य्यात् सहस्रन्तु चक्रमध्ये सुसाधकः ॥
अष्टोत्तरशतं कुर्य्यात्तर्पणं साधकोत्तमः ।
दग्धमीनासवेनापि सर्वदोषैर्न लिप्यते ॥
मन्त्रादिनाशे चैतत्तु प्रायश्चित्तं शिवोदितः ।
प्रजपेद्वर्षमालाभिरष्टोत्तरशतं मतम् ॥

अथ पञ्चतत्त्वसंस्कारः ।

लोधाकृष्णगेहे वापि कामाख्यावदने जनः ।
सर्वं शृङ्गारवेशञ्च कुर्य्यात् साधकसत्तमः ॥
सिन्दूरं कुङ्कुमं वापि धारणं कुलचन्दनम् ।
वामभागकृता शक्तिः सर्वाभरणशोभना ॥
गन्धपुष्पाद्यतैस्तान्तु पूजयित्वा तु साधकः ।
षट्कोणं बिन्दुसंयुक्तं वृत्तचापि त्रिकोणकम् ॥
पुनर्वृत्तं चतुष्कोणं कुङ्कुमेन विलेखयेत् ।
रक्तचन्दनसंलिप्तं रक्तवस्त्रेण वेष्टयेत् ॥
मूलमन्त्रेण संशोध्य योनिमुद्रां प्रदर्शयेत् ।
देवतां भावयेत्तत्र परमानन्दरूपिणीम् ॥
प्रणमेत् पञ्चमुद्राभिः कारणाधारमुत्तमम् ।
ह्रीं नमो योनिमुद्रायै च नमश्च कृताञ्जलौ ॥
ध्रुं नमः कुलमुद्रायां क्लौं नमो मत्स्यरूपके ।
ह्रौं नमः सपुटाकारे पञ्च मुद्राः समीरिताः ॥
प्रोक्षयेन्मूलमन्त्रेण धूपयेत्तेन कारणम् ।
गन्धपुष्पं ततो दत्त्वा प्राणायामं समाचरेत् ॥
ऋष्यादिन्यासं कृत्वा तु कराङ्गञ्च षडङ्गकम् ।
वर्णन्यासं ततः कृत्वा पञ्चमुद्राः प्रदर्शयेत् ॥
धेनुं योनिञ्च मत्स्यञ्च शङ्खं खड्गमत.परम् ।
हस्तं दत्त्वा ततः पात्रे पठेन्मन्त्रमनुत्तमम् ॥

ओं एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम्।
कचोद्भवां ब्रह्महत्यां तेन वै नाशयाम्यहम्॥
ओं सूर्य्यमण्डलसम्भूते! वरुणालयसम्भवे!।
अमाबीजमयि! देवि! शुक्रशापाद्विमुच्यताम्॥
ओं देवानां प्रणवो बीजं ब्रह्मानन्दमयं यदि।
तेन सत्येन देवेशि! ब्रह्महत्यां व्यपोहतु।

ओं वां वीं वूं वैं वौं वः ब्रह्मशापाद्विमोचितायै सुधा-देव्यै नमः। इति दशधा जपेत्।

ककारो रेफसंयुक्तः षड्दीर्घचन्द्रसंयुतः।

क्रों क्रीं क्रूं क्रैं क्रौं क्रः। सुधादेव्याः कृष्णशापं मोचय मोचय अमृतं स्रावय स्रावय स्वाहा। इति दशधा जपेत्॥ ओं छां छीं छूं छैं छौं छः छुरिका भवमोचिनि सर्वपशुजनमनश्चक्षुरिन्द्रियाणि स्तम्भय स्तम्भय नाशय नाशय घातय घातय इति त्रिः॥ ओं परमस्वामिनि! परमाकाशशून्यवाहिनि! चन्द्रसूर्य्याग्निभक्षिणि! पात्रं विश विश स्वाहा। इति त्रिः।

तन्मध्ये भावयेद्देवीममृतानन्दरूपिणीम्।
सूर्य्यकोटिप्रतीकाशां चन्द्रकोटिसुशीतलाम्॥
रक्तवस्त्रपरीधानां सर्वालङ्कारभूषिताम्।
रत्नकेयूरमाङ्गल्यैः शोभितां सर्वरूपिणीम्॥ इति ध्यानम्।
विधातव्यं सुधामध्ये साधनश्च सुसाधकैः।
पूजयेद्दिव्यपत्राद्यैरमृतानन्दनन्दिनीम्॥
तन्मध्ये भावयेद्देवं भैरवं भैरवीप्रियम्।
अमृतार्णवमध्यस्थं पञ्चवक्त्रं त्रिलोचनम्॥
वृषारूढं नीलकण्ठं सर्वाभरणभूषितम्।
अष्टादशभुजैर्युक्तं सदासुप्रसन्नधारिणम्॥

महामहेति विख्याते मीन तारापिय सदा ॥

ओं क्लीं क्लो ओं वु स स स इमं मीनं शोधय शोधय स्वाहा ॥ इति मीनशुद्धि ।

योनिमुद्रा ततो बद्धा दद्दा च योनिमुद्रिकाम् ।
पठेदिमं मनुं वत्स । सर्वकर्मसुसिद्धये ॥
योनिविद्या महाविद्या कामाख्या कामदायिनीम् ।
कामसिद्धिप्रदां देवी कामबीजादिका पराम् ॥
ओं क्लीं कामेश्वरि । महामाये क्लीं कालिकायै नम ॥
ओं योनिविद्या महाविद्या चतुर्वर्गप्रदायिनीम् ॥
कालाकलामु निश्रान्तं तारानामतरोमते ॥
ओं चों बु, ड्रों ह्र
योनिविद्ये योनिसिद्धे योनिकारणकारिके ।।
कामदाकामदा ज्ञेया सत्त्वमध्ये महामहा ।

ओं मौ बाले बाले त्रिपुरसुन्दरि योनिरूपे । मम सर्वं सिद्धिं देहि देहि योनिमुद्रां कुरु कुरु स्वाहा । इति मुद्रा शुद्धि ।

तत शक्तिशोधनम् । ओं ऐं क्लीं त्रिपुरदेवि । सर्वशक्तिके । शिवत्व देहि देहि ओं ओं इति तस्या शीर्षे दशधा जप्त्वा तस्या देहे मातृकान्यासं कृत्वा षड्ग्यादिन्यासं कराङ्गन्यासौ च विन्यसेत् । मूलं तद्हृदये शतं जपेत् । इति शक्तिसंस्कार ।

मूलं चोक्ता स्ववामे तु त्रिकोणं विलिखेद् बुध ।
तत्र मध्ये लिखेच्छक्तिं कामतत्त्वस्वरूपिणीम् ॥
तत्र पूजा विधातव्या गन्धपुष्पाक्षतैरपि ।
साधकोत्तापशक्तीये प्रणम्य च पुन पुन ॥
लज्जापूर्वं जलं दत्त्वा चाज्ञां नीत्वा तु साधकात् ।
तर्पयामीति चोक्ता तु तर्पयन्त समानयन् ॥

वामहस्तानामिकयाप्यङ्गुष्ठयोममाश्रयेत् ॥

ह स च म ल व र यूं आनन्दभैरवीं तर्पयामि स्वाहा इति मद्यमुद्रामयेन ब्रह्मरन्ध्रे विस्तर्पयेत् । एवं गुरुं परमगुरुं परापरगुरुं परमेष्ठिगुरुं ह स च म ल व र यूं आनन्दभैरवं स्वाहा इति चि॰ । ततो हृदये तद्रूपेण मूलमुच्चार्य्य श्रीमामेकजटां परमपददायीं तारादेवीं तर्पयामि स्वाहा । एवं चैव देवीविषये । तथाच तारानिगमे—

तर्पयेत्तु यदा तारां तर्पयेत् कालिकां पराम् ।
तर्पयेत् षोडशीं देवीं ह्यन्यथा निष्फला क्रिया ॥
यत्ते काली परा प्रोक्ता सा तारा परिकीर्त्तिता ।
सैव श्रीषोडशी देवी महात्रिपुरसुन्दरी ॥
अभेदं भावयेद्यस्तु स एव श्रीसदाशिवः ।
अन्यथा भावयेद्यस्तु स मूढोऽमूत्रकेश्वर ॥
स्वर्गे मर्त्ये च पाताले यः पादयुगमाश्रयेत् ।
स भवेत् कल्पतरुः महामोक्षानुकूलकः ॥

यत्रास्ति भोगो न च तत्र मोक्षो
यत्रास्ति मोक्षो न च तत्र भोगः ।
श्रीसुन्दरीसेवनतत्पराणां
भोगश्च मोक्षश्च करस्थ एव ॥

ततः स्वदक्षिणकरतले त्रिकोणं विलिख्य शुद्धिमुद्रासवं त्रिकोणमध्ये संस्थाप्य तत्राधीनं दशधा जप्त्वा श्रीं क्लीं क्रौं ह्रौं ह्रौं अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः । बीजतत्त्वम् अध-कोषस्थपरमतत्त्वेन शोधयामि स्वाहा । इति शुद्धिखण्डं वामहस्ते नीत्वा गृह्णीयात् । वामखण्डं नीत्वा श्रीं क्लीं ह्रौं क्रौं क्लीं कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं वामतत्त्वस्थपरमतत्त्वेन शोधयामि स्वाहा ।

इति पूर्ववत्। ततो दक्षिणखण्डं नीत्वा थीं क्रीं ह्रौं क्रां क्रीं ट ध न प फ ब भ म य र ल व श ष स इत्यकोणस्तत्त्वेन प्रतितत्त्वं शोधयामि स्वाहा। इति पूर्ववत्। ततो मध्यखण्डं नीत्वा थीं क्रीं ह्रौं क्रां क्रीं ह क्ष मायातत्त्वेन मायातत्त्वं शोधयामि स्वाहा। इति पूर्ववत्। ततश्च साधकेभ्यः शक्तिभ्यश्च पात्रं गृहित्व देयात्। सर्वे यथाविधि कर्म कुर्वन्ति। ततः कुण्डलिनीमुखे पात्रं गृहीतव्यम्।

पात्रोपरि जपेन्मन्त्रं सप्तधा साधकोत्तमः।
गुरुं स्मृत्वा पिवेन्मद्यं सर्वकामार्थसिद्धिदम्॥

ततः कुण्डलिनीमुखे मन्त्रपूर्वकं जुहुयात्। प्रथमपात्रं नीत्वा द्वितीयपात्रे शक्त्युच्छिष्टं नीत्वा च पिवेत्। तथाच—

शक्त्युच्छिष्टं पिवेन्मद्यं वीरोच्छिष्टन्तु चर्वणम्।
वीरोच्छिष्टात् पृथक् पाने पशुपानं प्रकीर्त्तितम्॥
निन्दास्तुतिः साधकानां हिंसाध्यानं कुले यतः।
निन्दा वा शक्तिकौलानां साधकानां न पूजनम्॥
अनिच्छया शक्तियोगं चक्रे वापि च मैथुनम्।
कामतः शक्तियोगं वा न ध्यानं दैवतेन वा॥
जपहोमविहीनं यन्त्रविहीनं कुलार्चनम्।
प्रकटं साधकानाञ्च असन्तुष्टय साधकः॥
एवं धर्मयुतः कौलो भ्रष्टः कौलः प्रकीर्त्तितः।
पञ्चमं पुरतः कृत्वा चतुर्थे जपमाचरेत्।
जपपूजां विना पानं पशुपानं प्रकीर्त्तितम्॥

अथ पावनस्नानमन्त्राः।

व्योमद्वैरवशेखरमविलसच्चन्द्रामृतप्लावितं
सेवाधिष्ठितयोगिभिर्जनगणैः सिद्धैः समाराधितम्।

आनन्दार्णवकं महाभकमिदं साक्षाच्चिखण्डामृतं
वन्दे श्रीप्रथमं कराम्बुजगतं पात्रं विशुद्धिप्रदम् ॥
हैमं नीलकलाञ्चितं सुमहिमायोगं महामांसकं
शिस्विवेतविचक्षणं रविवरच्छायाप्रदं शाश्वतम् ।
आनन्दादिमहार्णवे निगदितं ध्यानं महामोक्षदं
वन्दे पात्रमहं द्वितीयमधुना ज्ञानावबोधक्षमम् ॥
महापद्मे करे पद्मं योनिमाम्नोकयन् धिया ।
दग्धमीनममोपेतं वन्दे पात्रं तृतीयकम् ॥
महारूपां योनिमुद्रां सिद्धिदां सिद्धिरूपिणीम् ।
भजामि परया भक्त्या चतुर्थं पारयाम्यहम् ॥
योनिना लिङ्गमाप्रोतं पञ्चमं परिकीर्त्तितम् ।
तत्राहूतिनाशतिं कल्पयामीह पञ्चमम् ॥
सदानन्दप्रदं द्रव्यं महानन्दप्रदायकम् ।
गुरुपादगतो ध्याने षष्ठं पात्रं नमाम्यहम् ॥
समुद्रमाममभूतं समुद्भारिजं शुभम् ।
समुद्रे निगमे पात्रे वन्दामि सप्तमीं सुधाम् ॥
षट्दुर्गा शक्तिरूपा महिषासुरनाशिनी ।
पुनाति या जगद्धात्री भवानी शङ्करप्रिया ॥
महाविद्या दश प्रोक्ता महासिद्धिप्रदायिनी ।
महामोहविनाशाय मोचिनी दशमे करे ॥
एकादश महारुद्रा चतुर्सिद्धिप्रदायकाः ।
चतुःषष्टिसिद्धिदांस्तान् वन्दे चैकादशे करे ॥
द्वादशे द्वादशादित्याः सदा तर्पणतत्पराः ।
धामसंग्रहरूपेण द्वादशं वन्दयाम्यहम् ॥
त्रयोदशे महाविद्या शारदा परिभूयते ।
साधां सिद्धिप्रदां देवीं वन्दे पात्रत्रयोदशे ।

इति त्रयोदशपात्रवन्दनं सदा सुखप्रदम्। अन्यद् यत्प्रकारान्तरं पात्रवन्दनं ग्रन्थान्तरे दृश्यते तत् कालीतारासुन्दरीत्रिपुरेतरविषयम्।

यावन्न चलते चक्षुर्यावन्न चलते मनः।
तावत् पानं प्रकर्त्तव्यं मन्त्रसिद्धिप्रदायकम्॥
पीत्वा पीत्वा पुनः पीत्वा पुनः पतति भूतले।
उत्थाय च पुनः पीत्वा पुनर्जन्म न विद्यते॥

अथ तारानिगमोक्तकेवल श्रीताराविषये सर्वपात्रवन्दनमप्ययैकत्रैव। ऐं नाहं कर्त्ता कारयिता न च मे कार्य्यं नाहं भोक्ता भोजयिता वा न च भोज्यम्। अहं चिदात्मा स्वयमेव तेजः स्वयं गुरुर्विष्णुरहं सरूपः॥ नान्यं स्मरेत्र च भजेत् परिहाय चाद्यां नान्या गतो न च गतिः परिहाय चाद्याम्। इति पाने सर्वत्र शुद्धियुक्तेन। प्रथमं यथाशक्ति पिबेत्। ततः पञ्चतत्त्वक्रमः। प्रथमं वामहस्ते त्रिकोणाकारपानमुद्रया द्रव्यं नीत्वा दक्षिणहस्ते शुद्धिं नीत्वा मूलमुच्चार्य्य इदं शुद्धियुक्तासवं श्रीमत्तारा एकजटामहादेव्यै नमः। सर्वत्र शुद्धिसंस्कारे मूलमन्त्रजपः। वामहस्ते मांसं धृत्वा मूलं सप्तधा जप्त्वा एषा मांसशुद्धिः श्रीमत्तारा एकजटादेव्यै नमः। ततो मीनं वामहस्ते नीत्वा एषा मीनशुद्धिः श्रीमत्तारा एकजटादेव्यै नमः। ततः शक्तिलिङ्गमुद्रां प्रदर्श्य एषा शक्तिः श्रीमत्तारा एकजटादेवी महानन्दकल्पनाय रच रच पच पच प्रमीद प्रमोद चण्डा योनौ मम सिद्धिं देहि देहि ऐं ऐं ऐं स्वाहा इति निवेद्य यथायोग्यमानन्दं कृत्वा चक्रादितरस्थाने शक्तिं नीत्वा स्वपुरतः पुरोमुखीं संस्थाप्य तदुपरि बिन्दुविनिक्षेपं कृत्वा योनिलिङ्गमुद्रां प्रदर्श्य यदौचित्यमेव कर्णे मन्त्रा-योजमुद्रा कृताञ्जलिः।

शक्तिरूपे ! महादेवि ! योनिसिद्धिस्वरूपिणि ! ।
प्रसीद जगतां सृष्टिकारिणि ! ब्रह्मरूपिणि ! ॥
योनिरूपा महाविद्या योनिसिद्धिप्रदायिनी ।
सृष्टिः प्रजायते यस्मात् पुत्रत्वेनापि पाल्यते ॥
पुनः प्रलीयते योनौ सृष्टिस्थितिलयालये ।
साधयामि महाधर्म्मं तेन सिद्धिं विधेहि मे ॥

ॐ ह्रौं ह्रौं क्लीं कामेश्वरि महात्रिपुरे त्रिपुरालये ; ममैव सिद्धिं देहि देहि स्वाहा इति पठित्वा लिङ्गे शापमन्त्रं स्मरेत् तथा दिगम्बरो भूत्वा तां दिगम्बरीं कृत्वा पद्मं दृष्ट्वा तत्र बिम्बं रविबिम्बं चामरं सम्परोसापि शिखरं तथा नाभौ शतं जपेत् ।

योनिमध्ये शतं जप्त्वा प्रवेशं कारयेद्बुधः ।
महायोनिमयीं देवीं पार्वतीं परिभावयेत् ॥
स्वयं शिवस्वरूपः स्याद् चात्मानं शिवरूपिणम् ।
भावयित्वा निर्विकारं स्वयम् चाद्यं विघातयेत् ॥
साधको भावयेद्यस्तु कामुको वा प्रजायते ।
पच्यते नरके घोरे न मोक्षः कोटिजन्मतः ॥
तस्मात् सर्वप्रयत्नेन निर्विकारो भवेत् स्वयम् ।
अन्यथा सिद्धिहानिः स्यात् पतते नरके स्वयम् ॥
ॐ नाभिचैतन्यरूपाग्नौ हविषा मनसा स्रुचा ।
ज्ञान प्रदीप्यते नित्यमक्षवृत्तिर्जुहोम्यहम् ॥
ॐ धर्माधर्महविर्दीप्त आत्माग्नौ मनसा स्रुचा ।
सुषुम्नावर्त्मना नित्यमक्षवृत्तिर्जुहोम्यहम् ॥ इति त्वजेत् ।
ततस्तत्रासने स्थित्वा सहस्रं जपेत् । ततः पात्र प्रक्षाल्य
ऊर्द्धं च जले मायाबीजं विलिख्य तत्स्थेन सदा
ॐ यं यं स्पृशामि पादेन यो मां पश्यति चक्षुषा ।

स एव दासतां याति यदि शक्रसमो भवेत् ॥

इति ललाटे टीकां नीत्वा विहरेत्। द्रव्यं वारवाणि तोलकमितं पात्रे सदावेशयेत्।

साधकेभ्यश्च शक्तिभ्यो दत्त्वा पात्रं समानयेत्।
साधयेच्चिविधैर्भावैर्दिव्यवीरपशुक्रमैः ॥
दिव्यास्तु देववत्प्रायाः सदाचारपरायणाः।
करणाधानं तथा पात्रं हिंसाञ्चैव विशेषतः ॥
स्नानं सन्ध्याञ्च पूजाञ्च दिवा कुर्य्यात्स्वयं स्वयम्।
परस्त्रीमातृवद्दोध्यापरं पुत्रवदिष्यते।
सदा सत्यगुणं कृत्वा ब्रह्मचारी भवेत् ध्रुवम् ॥
योषायन्त्रं कुचौ वापि जकन्त साधकोत्तमः।
दृष्ट्वा मन्त्रं जपेत्तत्र दादशस्वर्णसुत्सृजेत् ॥
तर्पयेत् सुधया देवीं तारां तारकदायिनीम्।
साक्षादिन्द्रो भवेत् सोऽपि यदि योषां न च स्मरेत्।
योषास्पर्शनमात्रेण दिव्यभावो हथा भवेत्।
यावत्तपस्या कर्त्तव्या तावद्‌योषां विवर्जयेत् ॥
मत्स्यं मांसं तथा तैलं चिञ्चाञ्च मोदकं तथा।
स्त्रोशुद्रौ नैव द्रष्टव्यौ चान्यथा पतनं भवेत्।
जाते सिद्धे च तपसि ऋतुकाले व्रजेत् स्त्रियम्।
पञ्चपर्वं वर्जयित्वा नचेद्‌भ्रष्टो भविष्यति ॥

अत्रायं संक्षेपः भावसारावस्थां व्याख्यातो वीराचारोऽपि संक्षेपतः कामाख्यामूले व्याख्यातः पश्वाचारस्तु।

चितौ वा कामिनीं वापि शवं वा न च साधयेत्।
कालीतारासु विद्यासु नैवान्तर्यजनञ्चरेत् ॥
पीठस्थानं भावयेच्च परयोषां न दर्शयेत्।
वीरभावकुलो दिव्यस्तस्माद्दिव्यं प्रशस्यते ॥

अशक्तश्चाङ्गवैदोरो न पशुश्च कलौ क्वचित् ।
येन तेन प्रकारेण पशुभावं विवर्जयेत् ॥
स्वेच्छा यत्र क्षणे चास्ति का सिद्धिस्तेन भारते ॥

अथ तारानिगमोक्तश्लोकमेकं शान्तिस्तोत्रम् ।

श्रीं पाहि त्वं करुणामयि ! प्रियतमं सत्साधकं रक्ष मां
अष्टापायव नाशय प्रियतमावक्त्रारविन्दं मम ।
नित्यं देहि सुधासुधाचयमयीं सिद्धिं शिवे ! सिद्धिदम् ।
ज्ञानं मोक्षविधायकं कुरु शिवे ! संहारिणि ! पार्वति ॥
शान्तिस्तोत्रं पठित्वा तु यथेच्छं विहरेन्नरः ।
चक्रमध्ये भवेद्दया सा वक्तव्या न च कुत्रचित् ।
अथ प्रातर्भवेत् सापि नाशाय नरकाय च ।
चक्राकारं चरेच्चक्रं पंक्त्याकारमथापि वा ॥
प्रविष्टे भैरवीचक्रे सर्वे वर्णा द्विजोत्तमाः ।
निवृत्ते भैरवीचक्रे तथा सर्वे पृथक् पृथक् ॥
गन्तुं चक्रात् समायातं नत्वा नत्वा पुनः पुनः ।
अन्यथा मरणं तस्य गतिः स्याद्यमसादने ॥
अन्यचक्रस्य दूरस्थं स्वचक्रं वा सकृत् व्रजन् ।
स भवेत्तारकापुत्रो वसुसिद्धीश्वरो भवेत् ॥
अश्वमेधसहस्राणि वाजपेयशतानि च ।
लक्षं वापि तड़ागानां चक्रं दृष्ट्वा लभेत् फलम् ॥
यो ददाति महादेव ! शक्तिभ्यः साधकाय च ।
कलामात्रेण देवेषु कोट्यश्वमेधजं फलम् ॥
उपवासं भृगोः पातं सन्ध्या सव्रतधारणम् ।
तीर्थपर्य्यटनञ्चैव कौलः पञ्च विवर्जयेत् ॥
महापीठं व्रजेन्नित्यं नचेत् पीठमनुत्तमम् ।
तारापुरं महापीठं गन्तव्यं यततः सदा ॥

लक्षत्रयजपादेवि ! सर्वसिद्धीश्वरो भवेत् ॥
ईशाने चक्रनाथस्य वैद्यनाथस्य पूर्वतः ।
तारापुरमिदं ख्यातं नगरं भुवि दुर्लभम् ।
तत्र यत्नेन गन्तव्यं यत्र तारागिवालयम् ॥ इति संक्षेपः ॥
इति श्रीब्रह्मानन्दपरमहंसपरिव्राजकाचार्यविरचिते
तारारहस्ये तृतीयपटले तत्त्वादिरहस्यम् ।

---

अथ पूजा । तथाच तारानिगमे तारासारे च ।
आदौ जलस्य संशोध्य क्षालनं हस्तपादयोः ।
मूलेन तिलकं कुर्य्याद्विभूत्या तु त्रिपुण्ड्रकम् ॥
रक्तचन्दनटीकां वा सिन्दूरस्यापि वा पुनः ॥
ओं मणिधरि ! वज्रिणि ! सर्ववशङ्करि ! हुं फट् स्वाहा ।
इत्यनेन शिखां बद्धा ओं ह्रीं स्वाहेति चाचमनम् । गुरुः प्रथमं पूजागृहद्वारमागत्य ओं वज्रोदके हुं फट् स्वाहा इति जलमधिष्ठाय । ओं विशुद्धधर्माय सिसर्वपापानि शमयाशेषविकल्पमपनोय हुं फट् स्वाहा । इति हस्तौ पादौ च प्रक्षाल्य । मूलेन तिलकं विभूत्या त्रिपुण्ड्रं सिन्दूरगौरोचनान्यतमटीकां गृहीत्वा । ओं मणिधरि ! वज्रिणि ! सर्ववशङ्करि ! हुं फट् स्वाहा इति शिखां बद्धा ओं ह्रीं स्वाहा इत्याचम्य ।
ततः पीठं चिन्तयेच्च कृताञ्जलिपरो भवेत् ।
आचमनं ततः कृत्वा सर्वसिद्धीश्वरो भवेत् ।
वैरोचनादीन् विन्यस्य भूमिं संशोधयेत्ततः ॥
ततश्च भूमिं संशोध्य आसनाधस्त्रिकोणकम् ।
संशोध्य आसनं पश्चात् सर्वविघ्नान् विनाशयेत् ॥
ततः प्रयोगः ।
प्रातःकृत्यं तत्र संचिन्त्य तत्र अक्षतं करेत् ।

तन्मध्ये मणिपीठञ्च नानामणिविभूषितम्॥
नानालङ्कारसंयुक्तं मणिदेवैर्विभूषितम्।
शिवाभिर्बहुमांसास्थिमोदमानं समन्ततः॥
चतुर्दिक्षु शिवामुण्डचिताङ्गारास्थिसंयुतम्।
तन्मध्ये भावयेद्देवीं यथोक्तध्यानयोगतः॥

ततस्ताराचमनं ओं उग्रतारायै स्वाहा। ओं एकजटायै स्वाहा। ओं नीलसरस्वत्यै स्वाहा। इत्याचम्य। ओं ह्रीं स्वाहा इति वारी संशोध्य मधूबीजेन कूर्चेन चोष्ठौ परिशोधयेत्। पुनस्तेन हस्तौ क्षालयेत्। मुखे ओं वैरोचनाय नमः। नासायां ओं शङ्खपाण्डराय नमः। ओं पद्मनाभाय नमः। चक्षुषोः ओं असिताङ्गाय नमः। ओं मामकाय नमः। कर्णयोः ओं मामकाय नमः। ओं पाण्डवाय नमः। ओं तारकाय नमः। हृदि ओं पद्मान्तकाय नमः। शिरसि ओं यमान्तकाय नमः। वामबाहौ ओं विघ्नान्तकाय नमः। दक्षबाहौ ओं नरान्तकाय नमः। इति ताराचमनम्। ओं पवित्रे। भूमि। हुं फट् स्वाहा। इति योनिमुद्रया भूमिमभिमन्त्र्य। ओं रक्ष रक्ष मां हुं फट् स्वाहा इति जलसेकाद्भूमिं संशोध्य। ततः आसनाधस्त्रिकोणं विलिख्य ओं आः सुरेखे। वज्ररेखे। हुं फट् स्वाहा इत्यासनमभ्यर्च्य ओं ह्रीं आधारशक्तिकमलासनाय नमः। इत्यासनमभ्यर्च्य ओं सर्वविघ्नानुत्सारय हुं फट् स्वाहा इत्यासनमभ्यर्च्य। आसनं तावर्णये।

कोमलं विष्टरं चापि चूडकं मृदुकं तथा।
अष्टभागान्तगर्भस्य पतनं मृदु चोच्यते॥
चतुर्वर्षान्तरालस्य चूडकस्य विधीयते॥

पञ्चाग्नकुशयवनिर्मितं मत्स्यवालुकाभिः शोधितं मार्जितमिति।

ततश्चाण्डालिनीगर्भजातश्च ब्राह्मणीगमात् ।
ब्राह्मणीगर्भजातं वा चण्डालस्यापि चौरसात् ।
कमलासनमित्युक्तं मन्त्रसिद्धिप्रदायकम् ॥

इत्यादि कमलासनं संशोध्य । ओं

स्वाहा इति पुष्पाक्षतचैर्विघ्नानुत्सारयेत् ।
खेचरान् वामपादघातत्रयेण भौमान् ।

गणेशादीन् प्रणम्याथ दशदिग्बन्धनञ्चरेत् ।
करौ च गन्धपुष्पाभ्यां शोधयेत्तदनन्तरम् ॥

फडिति गन्धपुष्पाभ्यां करौ

कादिदशदिग्बन्धनञ्चरेत् । वस्त्रे ग्रन्थिं
शोधयेत् ।

पुष्पञ्च शोधयित्वा तु भूतशुद्धिं
तत कर्त्तारमाराध्य मूलं
एकादश प्रजप्तव्या प्रतिष्ठामनुरेव च
मातृकान्यासकं कृत्वा मातृकायाः
कराङ्गं मातृकायाश्च
प्राणायामं ततः

ओं मणिधरि ! वज्रिणि !
स्वाहा । इति कायवाक्चित्तं
संते शताय सम्यक् सम्पदाय । ओं
पुष्पसम्भवे ॥ पुष्पचयावकीर्णे हुं फट् ।
शुद्धिं कुर्य्यात् । स्वाहे उत्तानौ
लिनीं जीवात्मानं
स्थितपरमात्मनि शिवे संयोज्य
तदुद्भूतेनाग्निना लिङ्गशरीरं संदह्य
तदुद्भूतेन वायुना भस्म

शिरसि विचिन्त्य तदुद्भूतेनामृतेन तदखिं प्लावितं कृत्वा तस्मिन् विश्वव्यापके वारिणि आःकारादृक्तपङ्कजं तदुपरि टोंकारात् श्वेतपङ्कजं तदुपरि हूंकारं नीलसन्निभं तदुपरि स्त्रीं वीजभूषितां मातृकां ध्यायेत्।

श्रीं प्रत्यालीढ़पदां घोरां मुण्डमालाविभूषिताम्।
खड्गकर्त्रीसमायोगे सव्ये तरभुजद्वयाम्॥
कपालोत्पलसंयुक्तसव्यपाणियुगान्विताम्।
पिङ्गोग्रैकजटां ध्यायेन्मौलावक्षोभ्यभूषिताम्॥
अक्षोभ्यो हरमूर्द्धन्यस्त्रिमूर्त्तिर्नागरूपधृक्॥
चन्द्रसूर्य्याग्निनयनां महापात्रप्रमत्तिकाम्।

इति ध्यात्वा स्वशिरसि पुष्पं दत्वात्मर्यजनप्रकारेण मानसोपचारैराराध्य नमस्कुर्य्यात्। ततः स्वशिरसि श्रीं आं स्त्रीं क्रौं स्वाहा इत्येकादशधा जप्त्वा प्रतिष्ठाप्य कृताञ्जलिः।

पञ्चाशल्लिपिभिर्विभक्तमुखदोःपन्मध्यवक्षःस्थलां
भास्वन्मौलिनिवद्धचन्द्रशकलामापीनतुङ्गस्तनीम्।
मुद्रामक्षगुणं सुधाढ्यकलसं विद्याञ्च हस्ताम्बुजै-
र्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये॥

इति मातृकां ध्यात्वा। मातृकान्यासं कुर्य्यात्। अं नमो ललाटे। आं नमो मुखे। इं नमो दक्षिणचक्षुषि। ईं नमो वामचक्षुषि। उं नमो दक्षकर्णे। ऊं नमो वामकर्णे। ऋं नमो दक्षनसि। ॠं नमो वामनसि। ऌं नमो दक्षगण्डे। ॡं नमो वामगण्डे। एं नमो ओष्ठे। ऐं नमो अधरे। ओं नमो ऊर्द्ध्वदन्ते। औं नमो अधोदन्ते। अं नमो ब्रह्मरन्ध्रे। अः नमो मुखे। कं नमो दक्षबाहुमूले। खं नमः कूर्परे। गं नमः कवचे। घं नमोऽङ्गुलिमूले। ङं नमोऽङ्गुल्यग्रे। तथा दक्षहस्तेन चं छं जं झं ञं वामबाहुमूलचतुःसन्धिषु।

टं ठं डं ढं णं दक्षपादमूलचतुःसन्ध्यग्रेषु तं थं दं धं नं वामपादमूलचतुःसन्ध्यग्रेषु। पं नमो दक्षपार्श्वे। फं नमो वामपार्श्वे। वं नमः पृष्ठे। भं नमो नाभौ। मं नम उदरे। यं नमो हृदये। रं नमो दक्षस्कन्धे। लं नमः ककुदि। वं नमो वामस्कन्धे। शं नमो हृदादिदक्षकरे। षं नमो हृदादिवामकरे। सं नमो हृदादि दक्षपादे। हं नमो हृदादि वामपादे। ळं नमो हृदादि उदरे। क्षं नमो हृदादि मुखे।

ललाटे मुखवृत्ते च चक्षुषोः कर्णयोर्नसोः।
गण्डयोरोष्ठयोश्चापि दन्तयंक्त्योर्विशेषतः॥
ब्रह्मरन्ध्रे पुनर्वक्त्रे अकारादीन् न्यसेद् बुधः।
तर्जनीमध्यमायोगे अकारं विन्यसेद् बुधः॥
मध्यमानामिकायोगात् मध्ये वक्त्रे न्यसेत् ततः।
मध्यमाङ्गुष्ठयोगेन विन्यसेच्चक्षुषोस्तथा।
अनामाङ्गुष्ठयोगेन कर्णयोर्न्यसनीयकम्।
तर्जन्यङ्गुष्ठयोगेन नासायोगे परिन्यसेत्।
अनामामध्यमायोगाद् गण्डयोर्विन्यसेत् सदा॥
अङ्गुष्ठपर्वणा न्यासः कर्त्तव्यश्चोष्ठयोरपि।
मध्यमाग्रं समादाय दन्तयोर्न्यसनीयकम्।
अङ्गुष्ठाग्रं ब्रह्मरन्ध्रे मुखे करतलं विदुः।
शिवामुद्रां समादाय हस्तयोः साधकोत्तमः॥
विन्यसेद्धस्तपादेषु पार्श्वे पृष्ठे च नाभितः।
हृदाकारं तलं प्रोक्तं मातृकान्यासकर्मणि॥
ककुदि स्कन्धयोश्चापि पुनः सर्वत्र हस्तयोः।
ततो मूलेन शिर आदि पादान्तं पादादि शि-

रआदि हृदयान्तं हृदा- . . . . व्यापकं

श्रां कं खं गं घं ङं श्रां हृदयाय नमः। ईं चं छं जं झं ञं ईं शिरसे स्वाहा। ऊं टं ठं डं ढं णं ऊं शिखायै वषट्। ऐं तं थं दं धं नं ऐं कवचाय हुं। श्रौं पं फं बं भं मं श्रौं नेत्रत्रयाय वौषट्। श्रः यं रं लं वं शं षं सं हं ळं क्षं श्रः करतलपृष्ठाभ्याम् अस्त्राय फट्। श्रां कं खं गं घं ङं श्रां अङ्गुष्ठाभ्यां नमः। ईं चं छं जं झं ञं ईं तर्जनीभ्यां स्वाहा। ऊं टं ठं डं ढं णं ऊं मध्यमाभ्यां वषट्। ऐं तं थं दं धं नं ऐं अनामिकाभ्यां हुं। श्रौं पं फं बं भं मं श्रौं कनिष्ठाभ्यां वौषट्। श्रः यं रं लं वं शं षं सं हं ळं क्षं श्रः करतलपृष्ठाभ्यां अस्त्राय फट्।

योनिद्वादशविद्याश्च विन्यसेत् साधकोत्तमः।
मूर्द्ध्नि वक्त्रे तथा कण्ठे हृदये चोदरे तथा॥
नाभावाधारपद्मे च पदोर्बाह्वोश्च सर्वतः।
योनिवेद्या योनिनित्या योनिरूपा तथैव च॥
योनिमध्या योनिसिद्धा योनिक्लृप्ता च योनिदा।
योनिज्ञा योनिसाध्या च योनिज्ञाना च योनिपा॥
योनिपुष्पा तथाभ्यासयतुर्यगस्य सिद्धये॥

श्रमसुद्रया मूर्द्ध्नि श्रीं योनिवेद्यायै नमः। वक्त्रे श्रीं योनिनित्यायै नमः। कण्ठे श्रीं योनिरूपायै नमः। हृदये श्रीं योनिमध्यायै नमः। उदरे श्रीं योनिसिद्धायै नमः। नाभौ श्रीं योनिक्लृप्तायै नमः। मूलाधारे श्रीं योनिदायै नमः। दक्षपादे श्रीं योनिज्ञायै नमः। वामपादे श्रीं योनिसाध्यायै नमः। दक्षबाहौ श्रीं योनिज्ञानायै नमः। वामबाहौ श्रीं योनिपायै नमः। सर्वाङ्गे श्रीं योनिपुष्पायै नमः। इति विन्यसेत्। इति द्वादशयोनिन्यासः।

दक्षहस्ताङ्गुष्ठेन दक्षनासापुटं धृत्वा मूलं षोडशवारं जप्त्वा वायुं पूरयेत्। ततो नासापुटौ धृत्वा चतुःषष्टिवारजपेन

कुम्भयित्वा वामनासायां कनिष्ठानामिकाभ्यां धृत्वा द्वात्रिंश-द्वारजपेन दक्षिणेन रेचयेत्। पुनर्दक्षिणेनापूर्य वामेन रेचयेत्।

कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम्।
प्राणायामः स विज्ञेयः पूरकुम्भकरेचकैः॥
इत्थमेव वारत्रयं कुर्यादिति प्राणायामः।

शिरसि श्रीं अक्षोभ्य ऋषये नमः। मुखे श्रीं वृहस्पति-च्छन्दसे नमः। हृदि श्रीमत्तारायै एकजटायै देव्यै नमः। मूलाधारे हुं बीजाय नमः। पादयोः फट् शक्तये नमः। सर्वाङ्गे निजबीजकीलकाय नमः। इति ऋष्यादि न्यासः।

पीठन्यासं ततः कृत्वा पीठशक्तिं न्यसेत्ततः।
तत्त्वन्यासं विधायाथ बीजन्यासं समाचरेत्॥
कराङ्गञ्च षडङ्गञ्च न्यस्त्वा वर्णांश्चैस्ततः।
संशोध्य यन्त्रं देहे तु पीठपूजां समाचरेत्॥
गणेशं वटुकञ्चैव क्षेत्रपालञ्च योगिनीम्।
पीठपूजां ततः कृत्वा पीठशक्तिं प्रपूजयेत्॥
षोढां कृत्वा ततो मन्त्री मध्यं कृत्वा ■ तत् पुनः।
व्यापकं पञ्चधा कृत्वा पूजयेत् परदेवताम्॥

हृदि हस्तं दत्त्वा मृगमुद्रया हृत्पद्मस्य केशरेषु श्रीं अमृता-र्णवाय नमः। श्रीं कल्पवृक्षाय नमः। श्रीं मणिपीठाय नमः। श्रीं नानालङ्कारेभ्यो नमः। श्रीं मुनिभ्यो नमः। श्रीं देवेभ्यो नमः। श्रीं बहुमांसास्थिमोदमानशिवाभ्यो नमः। चतुर्दिक्षु श्रीं शवमुण्डचिताङ्गारास्थिभ्यो नमः। इति पीठन्यासः।

हृदि श्रीं लक्ष्म्यै नमः, श्रीं सरस्वत्यै नमः, श्रीं प्रीत्यै नमः, श्रीं कीर्त्यै नमः, श्रीं शान्त्यै नमः, तुष्ट्यै नमः, श्रीं पुष्ट्यै नमः, इति पीठशक्तिन्यासः।

ओं आत्मतत्त्वाय स्वाहा इति आधारादि हृत्पर्य्यन्तम्। ओं विद्यातत्त्वाय स्वाहा इति हृदादि मुखपर्य्यन्तम्। ओं शिवतत्त्वाय स्वाहा इति मुखादि ब्रह्मरन्ध्रान्तम्। इति तत्त्वन्यासः।

मन्त्रं पञ्चखण्डं कृत्वा ब्रह्मरन्ध्रात् ललाटान्तम्। आद्यबीजं नमोऽन्तं न्यसेत्। ललाटात् मुखान्तं द्वितीयबीजं नमः। मुखात् कण्ठान्तं तृतीयबीजं नमः। कण्ठात् हृदयान्तं चतुर्थवर्णं नमः। हृदयान्मुखान्तं पञ्चमवर्णं नमः। इति बीजन्यासः।

हकारं रेफसंयुक्तं षड्दीर्घेण समन्वितम्।
चन्द्रखण्डयुतं कृत्वा विन्यसेत् साधकोत्तमः॥
एकजटा तारिणी च न्यस्ता वज्रोदका तथा।
उग्रजटा ततो न्यस्ता महाप्रतिसरा तथा॥
पिङ्गोग्रैकजटा पश्चात् कराङ्गेषु षडङ्गतः॥

तथा ह्रां एकजटायै अङ्गुष्ठाभ्यां नमः। ह्रीं तारिण्यै तर्जनीभ्यां स्वाहा। ह्रूं वज्रोदके मध्यमाभ्यां वषट्। ह्रैं उग्रजटे अनामिकाभ्यां हुं। ह्रौं महाप्रतिसरे कनिष्ठाभ्यां वौषट्। ह्रः पिङ्गोग्रैकजटे करतलपृष्ठाभ्याम् अस्त्राय फट्। इति कराङ्गन्यासः।

ह्रां एकजटायै हृदयाय नमः। ह्रीं तारिण्यै शिरसे स्वाहा। ह्रूं वज्रोदके शिखायै वषट्। ह्रैं उग्रजटे कवचाय हुं। ह्रौं महाप्रतिसरे नेत्रत्रयाय वौषट्। ह्रः पिङ्गोग्रैकजटे करतलपृष्ठाभ्याम् अस्त्राय फट्। इति षडङ्गन्यासः।

अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं नमो हृदि। एं ऐं ओं औं कं खं गं घं नमो दक्षबाहौ। ङं चं छं जं झं ञं टं ठं डं ढं नमो वामबाहौ। णं तं थं दं धं नं पं फं बं भं नमो दक्षपादे। मं यं रं लं वं शं षं सं हं लं क्षं नमो वामपादे। ततः श्रीमदेकजटायन्त्रम् उद्धृत्य सम्कुर्य्यात्। ओं आः सुरेखे

मध्ये रेखे हुं फट् नमः। इति योनिमुद्रां प्रदर्श्य यन्त्रं शोधयेत्। ततः पूजामारभेत्। पूर्वादितः श्रीं ह्रीं गां गणपतये नमः। दक्षिणे श्रीं ह्रीं वां वटुकाय नमः। पश्चिमे श्रीं ह्रीं क्षें क्षेत्रपालाय नमः। उत्तरे श्रीं ह्रीं यां योगिनीभ्यो नमः। पीठन्यासवत् पीठपूजां कृत्वा पूर्वाद्यष्टदले पीठशक्तिं संपूज्य मध्ये ह्सौः सदाशिवमहाप्रेतपद्मासनाय नमः। ततः स्ववामे बिन्दुमध्यत्रिकोणवृत्तचतुरस्रमण्डलं कृत्वा तत्र श्रीमदेकजटादेव्याः अर्घ्यस्थानाय नमः। तत्र त्रिपदिकामावाह्य जलेनाभ्युक्ष्य फडिति पात्रं प्रक्षाल्य तत्र संस्थाप्य श्रीमदेकजटादेव्याः श्रीं अर्घ्य पात्राय नमः। ततो मूलेनापूर्य रक्तचन्दनबिल्वपत्रदूर्वाक्षतादीन्निक्षिप्य विलोममातृकावर्णैर्मूलेन च बिन्दुसुतसुधामयजलेन शङ्खमापूर्य तत्र गङ्गेचेत्यादिना अङ्कुशमुद्रया अर्घ्यं मावाह्य यं इति धेनुमुद्रया अमृतीकृत्य योनिमुद्रां प्रदर्श्य मत्स्यमुद्रया आच्छाद्य तत्र देवीं ध्यात्वा पुष्पाञ्जलिं दत्त्वा षडङ्गानि विन्यस्य मूलं तत्र दशधा जप्त्वा तज्जलैः पुष्पादिना आत्मानं पूजोपकरणं चाभ्युक्ष्य पद्माघ्यं कृत्वा पञ्चधा व्यापकं कृत्वा देवीं ध्यायेत्।

ध्यायेत् श्रीतारकादेवीं कच्छपमुद्रया।
विशेषतः फलार्थी च ध्यायेत् तां योनिमुद्रया॥
प्रत्यालीढपदार्पिताङ्घ्रिशवहृद्घोराट्टहासा परा।
खड्गेन्दीवरकर्त्रिखर्परभुजा हुंकारबीजोद्भवा॥
खर्वा नीलविशालपिङ्गलजटाजूटैकनागैर्युता
जाड्यं न्यस्य कपालके त्रिजगतां हन्त्युग्रतारा स्वयम्।

इति ध्यात्वा यन्त्रे तत् पुष्पं दत्त्वा ध्यानरहस्यं विभाव्य आवाहयेत्।

यथा सर्वांमभिनवजलधरनीलां लम्बोदरीं व्याघ्रचर्मावृत-

शोभितकटीम् पीनोन्नतपयोधरा रक्तवर्तुलनेत्रत्रया पृष्ठेऽति नीलजटाजूटा शीर्षेऽक्षोभ्यमहादेवकृतनागफणातिशोभिता पार्श्वद्वये लम्बमाननीलोत्पलमाला पञ्चमुद्राखरूपशुभ्रत्रिकोणाकारकपालपञ्चकमाम् अतिनीलजटाजूटा विस्तीर्णचमरिकाकेश इव महाविगलितचिकुरां शुभ्रवर्णतक्षकनागकृतकङ्कणा रक्तवर्णं नागकृतस्वल्पहारा चित्रितवर्णशेषनागकृतहारा स्वर्णवर्णस्वल्पनागपादाङ्गुरीयकाम् इन्द्रनागकृतकटिसूत्रा दूर्वादलश्यामल नागकृतवलया चन्द्रसूर्य्यवह्निकृतनेत्रत्रया कोटिकोटिबालरविच्छविकृतदक्षिणनेत्रा कोटिकोटिबालचन्द्रकृतवामनेत्रा लघलघद्दहनकृतोर्द्ध्वनेत्रा लम्बोदरा महाकालशवरूप हृदयस्थितसङ्कुचितदक्षिणचरणा शवपादद्वयस्थितप्रसारितवामचरणाम् एतेन प्रत्यालीढपदा सद्यश्छिन्न गलद्रुधिरान्योन्यकेशग्रथितमुण्डमालावलीरम्या सर्वस्त्यलङ्कार शोभिता महामाहविमोहिनी महामोक्षविदायिका विपरीत रतासक्ता स्त्यावेशस्मेराननाम् । दक्षिणहस्ताधोधृतकाश्विकां तदूर्द्ध्वं लघचन्द्रहासखड्गधरा वामोर्द्ध्वे सर्वशश्याणा भयहरणाय श्यासवगलितनालोत्पलकिञ्चिद्विकसररक्तनागधरा तदध कपालवसकसद्य कृत्तमुण्डशोभितभुजा हुङ्कारयोजोद्भवा सर्वब्रह्माण्डाना कर्त्री षपयत्री षोडशाब्दा सर्वभ्रान्तिविदायिनी ध्यात्वा आवाहयेत् ।

श्रीं देवेशि ! भक्तिसुलभ ! परिवारसमन्विते ! ।
यावत्त्वा पूजयिष्यामि तावत्त्वं सुस्थिरा भव ॥

इत्युक्त्वा कृताञ्जलिना यामदकजटे । देवि ! इहागच्छागच्छ अधोमुखाञ्जलिना इह तिष्ठ तिष्ठ गर्भाङ्गुष्ठमुष्टिभ्याम् इह सन्निधेहि सन्निधेहि तदधोमुखेन इह सन्निरुद्धस्व हस्तं भ्रामयित्वा अत्र अधिष्ठानं कुरु मम पूजा गृहाण ॥

आकारं विन्दुसंयुक्तं मायापाशविभूषितम्।
वह्निजाया च हंसान्तः प्रतिष्ठामन्त्र ईरितः॥

आं ह्रीं क्रों स्वाहा हंसः श्रीमदेकजटादेवतायाः प्राणा इह प्राणाः एवं जीव इह स्थितः एवं सर्वेन्द्रियाणि इह स्थितानि एवं वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा। इत्यनामाङ्गुष्ठसंयुक्तायेन प्रतिष्ठापयेत्। ततो मूलं दशधा जप्त्वा धेनुयोनिमत्स्याङ्कुशमङ्कखड्गमृगशालिनीमुद्राः प्रदर्श्य श्रीमदेकजटे! देवि! वरपुष्पं प्रतीच्छ हुं फट् स्वाहा। इति पुष्पाञ्जलीन् दत्त्वा पूजयेत्।

आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम्।
मधुपर्काचमनं स्नानं वसनाभरणानि च॥
सुगन्धि कुसुमं धूपदीपनैवेद्यवन्दनम्।

दशोपचारैर्वा पञ्चोपचारैर्वा पूजयेत्। पुरुषधिया सोऽहमिति मत्वा श्रीं वरपुष्पं प्रतीच्छ हुं फट् स्वाहा इत्युच्चार्य पूजयेत्। एतत् पाद्यं नमः पाद्यं गृहीत्वा तदुपरि पूजामन्त्रम् एकजटादेवतायै एतत् पाद्यं नमः। इति कृतमुद्रिप्रसारिताङ्गुष्ठतर्जनीभ्यां दद्यात्। तथा इदमर्घ्यं स्वाहा।

पाद्यञ्च पादयोर्दद्यात् मौलौ चार्घ्यं निवेदयेत्।
गन्धं भाले तथा पुष्पं पादयोश्च निवेदयेत्॥

इदं स्नानीयं स्वधा। मृगमुद्रया गन्धोऽयं नमः। अञ्जलिना पुष्पाणि वौषट्। ततः सव्यामे घण्टां चानीय गन्धपुष्पाभ्यां श्रीं जयध्वनिमन्त्रमातः स्वाहा इति घण्टां सम्पूज्य धूपं पात्रोपरि संस्थाप्य पूजामन्त्रं जप्त्वा वामहस्ते धृत्वा एष धूपः स्वधा। इति निवेद्य मृगमुद्रायां नीत्वा वामहस्तेन घण्टां वादयन् आनासासुखतो धूपसमीरणं प्रापयेत्। तथा दीपोऽयं स्वाहा। दृष्टिपर्यन्तं दीपं दत्त्वा नीराजयेत्।

आतानन्दनाथान् तथा महाकालरुद्राख्याश्च उग्राख्य-भीमाख्य-घोराख्य-भ्रामर्य्याख्य-कालपत्राख्य-पिङ्गकपाख्याः । ततः पूर्वादि वामावर्त्तेनाष्टदले पूजयेत् । ओं विरोचन बलिपुष्पं प्रतीच्छ हुं फट् स्वाहा । एवं शङ्खपाण्डर पद्मनाभ अमिताङ्गनामक पाण्डर तारक पद्मान्तक बलिपुष्पं प्रतीच्छ हुं फट् स्वाहा इति पूर्वद्वारे । तथा उदीच्यां यमान्तकप्रज्ञान्तकविघ्नान्तक-दक्षिणे नरान्तक एतान् संपूज्य बलिपुष्पाञ्जलीन् दत्त्वा पाद्यार्घ्यादिना देवीं संपूज्य वामे त्रिकोणं षट्कोणं वृत्तं चतुरस्रं विलिख्य तत्र विभक्तिमाधारपात्रं समांसतण्डुल-दधिहरिद्रादग्धमीनामत्स्यपिष्टकलवणार्द्रकान्यमलं गृहीत्वा वामहस्ते जलं नीत्वा ओं ह्रीं श्रीमदेकजटे देवि मयोपनीतं बलिं गृह्ण गृह्ण गृह्णापय गृह्णापय मम शान्तिं कुरु कुरु परविद्यामाकर्षयाकर्षय त्रुट त्रुट छिन्धि छिन्धि भिन्धि भिन्धि सर्वजगद्वशमानय ओं ह्रीं स्वाहा इति त्रिः पठित्वा बलिं दद्यात् ।

यदुक्तं कालिकाकल्पे बलिं स्वतनुशोणितम् ।
तत् सर्वं कालिकायां न ताराविषये क्वचित् ॥
स्वगात्ररुधिरं यत्तु तारकायै प्रदीयते ।
तस्य रुष्टा सदा तारा न पूजाफलमाप्नुयात् ॥
त्रिकोणषाष्टकोणस्य वृत्तं कोणचतुष्टयम् ।
बलिदाने त्विदं स्थानं शस्यते तारकार्चने ॥
ओं ह्रीं एकजटेत्युक्त्वा देवीति तदनन्तरम् ।
महायक्षाधिपतये मयोपनीतक पदम् ॥
बलिश्चोक्त्वा गृह्ण युग्मं श्रावयेत्तदनन्तरम् ।
गृह्णापय पदद्वन्द्वं मम शान्तिं समाचरेत् ॥
कुरुद्वयं परविद्यामाकर्षयाकर्षय एव च ।

स्फुटयुग्मं वदेत् पश्चात् छिन्धियुग्मं ततः परम् ।
भिन्धियुग्मं समुच्चार्य्य जमल् सर्वं मम नय ।
सप्ततारं समुच्चार्य्य बलिं दद्यात् पठेत्त्रयम् ।

ततः पुनरर्घ्यं कृत्वा श्रीं ह्रीं ऐं श्रीमदेकजटे देवि मम वैरिणां भिन्धि भिन्धि गृहाणार्घ्यं सर्वबाधासमितं देहि स्वाहा । इत्युक्त्वा जय जय इत्युक्त्वा नीराजनपुरःसर देव्या मौलौ दत्त्वा यथाशक्ति जप्त्वा समर्प्य जपं देव्या वामहस्ते दद्यात् ॥ ततस्तवकवचादिपाठः सर्वत्र कुम्भक्रियादिपूर्वकः ॥

ततः प्रदक्षिणं कुर्य्यात् घण्टावाद्यपुरःसरम् ।
ऊर्द्धं दक्षिणकं हस्तं कृत्वा वाग्यतो नरः ॥
याम्याच्च वायव्यां गच्छेत् स्थित्वा विचिन्त्य शाङ्करीम् ।
पुनर्याम्यं प्रगत्वा तु प्रणमेच्च पुरःस्थितः ॥
प्रणमेत् नामवाक्येन त्रिः प्रकुर्य्यात् प्रदक्षिणम् ।
दण्डाकारं निपत्याथ च, पत्नी भूमिमध्यतः ॥
पञ्चाङ्गानाञ्च पञ्चानि पञ्चोक्तस्य समानतः ।
त्रिकोणाकारमाधाय किञ्चिद्वामांगतो नमेत् ॥
उरसा शिरसा पश्चात् पाणिभ्यां जानुतस्तथा ।
नासाचिबुककर्णेन प्रणम्य सिद्धिमाप्नुयात् ।

अथ जपक्रमः ।

कुल्लुकां प्रजपेन्मूर्ध्नि दशधा मन्त्रसिद्धये ।
मुखे सेतुं सप्तधा च प्रणवेन पुटं हृदि ॥
प्राणायामपरः पूर्वं जपेत् साधकसत्तमः ।

कुल्लुका यथा

ह्रीं द्वितीयं चन्द्राढ्यं भस्मा पाठश्च एव च ।

ओं ह्रूं स्त्रीं इति शिरसि दशधा जपेत् । मुखे सेतुं ॐ इति सप्तधा जपेत् । हृदि प्रणवपुटितमन्त्रं सप्तधा जपेत् ।

सर्वत्र चादौ प्राणायामः। ततः सेतुं ततो महासेतुं ततो मन्त्रशिखाम् ॐ ह्रीं ऐं इति सप्तधा जपेत्। ततो मन्त्रप्राणं कलरीं इति सप्तधा। ततः सहस्रम् अष्टोत्तरशतं विंशतिं वा जपेत्। ततो जलपुष्पं करतले नीत्वा

ॐ गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे देवि! त्वत्प्रसादात्त्वयि स्थिते॥

इति जपं देव्या वामहस्ते समर्पयेत्। ततः प्राणायामः। इति जपक्रमः। काम्यजपः पुरश्चरणप्रकरणे वक्तव्यः। नित्यजपे नियमम् अस्या एव।

सहस्रं प्रजपेन्मन्त्रं धर्ममोक्षार्थसिद्धये।
अष्टोत्तरशतं यत्तु तत्पूजायाः फलाप्तये॥
विंशतिञ्च जपेन्मन्त्रं पूजासिद्ध्यर्थमेव हि।

पूजनेतरजपे तारार्णवे।

यावन्न क्रियते कर्म पुरश्चरणमुत्तमम्।
तावदेव प्रजप्तव्यं सहस्रादधिकं शिव॥
प्रजपेत् साधको यस्तु चोभयुक्तोऽप्यनन्यधीः।
सहस्रादधिकं यस्य! सहस्रेषु समर्पयेत्॥

एतेन पुरश्चरणहीनः सहस्रादूर्द्ध्वं न जपेत्। यद्येकदा अयुतं जपेत् तदा सहस्र सहस्र जप्त्वा समर्पयेत्।

सहस्रं प्रजपेन्मन्त्रं पुरश्चरणकर्मणि।
शतं तेन प्रजप्तव्यं ह्यधिकं न कदाचन॥

ततोऽर्घ्यजलं नीत्वा ॐ इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत् स्मृतं यदुक्तं यत् कृतं तत् सर्वं ब्रह्मार्पणं भवतु मदीयं सकलं सम्यक् श्रीमदेकजटादेवतायै सर्वं समर्पितमस्तु।

ततः संहारमुद्रया क्षमस्वेति विसृज्य ऐशान्यां त्रिकोणे
ॐ उच्छिष्टचाण्डालिन्यै नमः। ततस्तेन यन्त्रलेपनचन्दनेन
टीकापादादिकं नैवेद्यं किञ्चित् स्वीकृत्यान्यच्छक्तिभ्यो दत्त्वा
यथेच्छं विहरेदिति एकजटापूजापद्धतिः।

प्रत्यालीढ़पदां देवीं महामायां त्रिलोचनाम्।
सर्वालङ्कारभूषाढ्यां महानीलप्रभां पराम्॥
खड्गं पाशं दक्षिणे च वामेन्दीवरमूर्द्धतः।
दधतं चसकं देव्या भावयेत् साधकोत्तमः॥

इति ध्यात्वा तत्कल्पोक्तयन्त्रे पूजयेत्॥ इति तारापूजा।

अथ कामतारापूजनम्। तत्कल्पोक्तयन्त्रे।

घोरङ्गाढ्यां महादेवीं तारिणीं तारकरूपिणीम्।
चसकेन्दीवरञ्चैव खड्गञ्चापि वरं तथा॥
व्याघ्रचर्मपरीधानां सर्वालङ्कारभूषिताम्।
दधाना नागहाराञ्च महायोगस्वरूपिणीम्॥

इति ध्यात्वा आवाह्य पूर्ववत् सर्वम्। इति कामतारा-
पूजनम्।

उग्रताराप्रकरणोक्तयन्त्रे या या लक्ष्म्यादिपीठशक्तयः।
अत्र ताः सन्ति किन्तु,

इच्छाज्ञानक्रियाञ्चापि कामिनीं कामदायिनीम्।
रतिं रतिप्रियाञ्चैव रतिदां परिपूजयेत्॥
शवोपरि महादेवीं शवेशहास्यसंयुताम्।
विपरीतरताशक्तासुग्रतारां परात्पराम्॥
कर्त्रिं काण्डसंयुक्तां दक्षिणे तारिणीं पराम्।
वाममार्गे नीलपद्मं चसकं तदधः धृतम्॥
मुण्डमालावलीरम्यां रक्तधाराविभूषिताम्।
घोरहास्यां त्रिनेत्राञ्च सर्वदा ज्ञानदायिनीम्॥

एकवेणीं महावेणीं फणिराजविभूषिताम्।
सुवर्णमुकुटेयुक्तां शुभ्रदन्तविभूषिताम्॥
इति ध्यात्वा पूर्ववत्। इति उग्रतारापूजनम्।

शम्भुपत्नीमहाकालप्रियाणाम् प्राणायामः वेदकलावसुमन्त्रयुतः। इयान् विशेषः।—

नीलवाणीं सदा वन्दे नीलाञ्जनचयप्रभाम्।
स्थूलहारसमोपेतां व्याघ्रचर्मावृतां कटौ॥
नागेनावेष्टितां देवीं फणिहारविधारिणीम्।
फणिमस्तकयोगेन दक्षपादं प्रपञ्चितम्।
वामपादं शवे नाभौ रत्नासनहृदान्विताम्॥
तामसीं महतीं विश्वमोहिनीं घोरकामिनीम्।
शिवचक्षस्य भ्रमरीं प्रत्यालीढपदां शुभाम्॥
चमरीकेशसंस्कारसदागलितकुन्तलाम्।
नानामणियुतां शोभें महापापविनाशिनीम्॥
कपालञ्चापि खड्गञ्च नीलपद्मां सरस्वतीम्।
भावयेत् सर्वसिद्धार्थं नीलवाणीं कवित्वदाम्।

एवं ध्यात्वा सर्वं पूर्ववत्। यन्त्रस्याष्टदिक्षु पद्मखड्गदण्डमायकपालशूलगदापद्मचक्रादीन् पूजयेत्। इति विशेषः। इति पूजनं नीलसारदायाः महानीलसरस्वत्याः। ततो यथाशक्ति नित्यहोमः। तथा निगमे।

एकधा ह्याहुतिर्येन तारकायै प्रदीयते।
कोटिजन्मकृतं पापं तत्क्षणात् तस्य नश्यति॥
ततो बलिदानम्।
छागं वा महिषं वापि शूकरं वा पतत्रिणम्।
हस्तिनं मूषिकं वापि मार्जारञ्चापि मेषकम्॥
दत्त्वा देव्यै महादेव्यै स भवेत् कुलनायकः।

बलिं पुरत आनीय योनिमुद्रां प्रदर्श्य च ॥
दक्षिणे तद्बलं कृत्वा वामपृष्ठे नियोजयेत् ।
योमदेकजटे ! देवि ! बलिं गृह्ण सुरोत्तमे ! ।
मन्त्राणाञ्चापि मे सिद्धिं लतासिद्धिञ्च देहि मे ॥

ॐ ह्रीं श्रीं हुं ऐं ऐं सर्वसिद्धिप्रदे ! मे चतुर्वर्गसिद्धिं देहि देहि बलिं गृह्ण गृह्ण स्वाहा । इति निवेद्य खड्गं जवापुष्पादिना संपूज्य एकघातेन छिन्द्येत् । इति बलिदानम् ।

आसवं संविदाञ्चापि निवेद्यानन्दमाचरेत् ।
सदा पूजा प्रकर्त्तव्या ह्यन्यथा निष्फला भवेत् ॥

संविदां चतुर्धा विभज्य प्रथमे तत्त्वमुद्रया
ॐ संविदे ! ब्रह्मसंभूते ! ब्रह्मपुत्रि ! सदानघे ! ।
भैरवाणाञ्च तृप्त्यर्थं पवित्रा भव सर्वदा ॥

ॐ ब्राह्म्यै नमः स्वाहा । इति भूमौ क्षिपेत् ।
ॐ सिद्धिमूलकरे ! देवि ! हीनबोधप्रबोधिनि ! ।
राजप्रजावशङ्करि ! शत्रुकण्ठे त्रिशूलिनि ! ॥

ऐं विजयायै नमः ।
ॐ नमस्यामि नमस्यामि योगमार्गप्रदर्शिनि ! ।
त्रैलोक्यविजये ! मातः ! समाधिफलदा भव ।

हूं वैश्यायै नमः ।
ॐ अघानिन्धनदीप्ताग्ने ! ज्ञानाग्निब्रह्मरूपिणि ! ।
आनन्दस्याहुतिं प्रीतिं सम्यग् ज्ञानं प्रयच्छ मे ॥

क्लीं शूद्रायै नमः स्वाहा । ततस्तन्मध्ये बिन्दोर्ध्वं विनिक्षिप्य ॐ अमृते ! अमृतोद्भवे ! अमृतवर्षिणि ! श्रियं ! अमृतमाकर्षय आकर्षय स्वाहा । ततस्तत्त्वमुद्रया पूर्ववत्तर्पयेत् ॥ ततो भूमौ किञ्चिन्निक्षिप्य ऐं ऐं वद वद वाग्वादिनि ! मम जिह्वायां स्थिरीभव सर्ववशयं कुरु कुरु स्वाहा । इत्यनेन क्षुद्रादिति ॥

यत्रास्ते कमला कृताञ्जलिपरा वीणाधरा शारदा
ताराख्यमनुस्मरन् प्रियतमं चोमायच.कारणम् ।
ब्रह्मानन्दकृतौ सुसाधनविधौ तारारहस्ये शुभे-
ऽप्याचारादिविधौ तृतीयपटलः सर्वार्थसिद्धिप्रदः ॥

---

## अथ चतुर्थः पटलः ।

### अथ षोढा ।

प्रणवं मातृकावर्णैः पुटितं मातृकास्थले ।
तेनैव पुटितं वर्णं न्यसेत्तत्रैव पार्वति ॥ इति यामले ।
केवलां मातृकां कृत्वा मातृकां तारसंपुटाम् ।
तारेण पुटितां तान्तु लज्जा तु मातृकापुटा ॥
लज्जया पुटिता सा तु न्यस्तव्या साधकोत्तमैः ।
मातृकया पुटा योषा योषया मातृका तथा ॥
मातृकया पुटं कूर्चं कूर्चेन पुटितार्णताम् ।
मातृकापुटितं चास्त्रं चास्त्रं मातृकया तथा ।
मातृकापुटितं मन्त्रं मन्त्रेण पुटितान्तु ताम् ॥
षड्युतं विन्यसेद् यस्तु वायुकुम्भकयोगतः ।
महायोगी भवेत् सोऽपि देवीं पश्यति चक्षुषा ॥
षोढाहीनस्य मन्त्रस्य दुर्बलत्वं प्रजायते ।
न सिद्धिदो भवेत् सोऽपि मोक्षदो न कदाचन ॥

षं तारं षं षों षं नमः । षों षं षों नमः । स्त्रीं षं स्त्रीं षं नमः । स्त्रीं षं स्त्रीं नमः । षं ह्रीं षं नमः । ह्रीं षं ह्रीं नमः । षं हुं षं नमः । हुं षं हुं नमः । षं फट् षं नमः । फट् षं फट् नमः । षं मूलं षं नमः । मूलं षं मूलं नमः । षं नमः षं लज्जा षं नमः लज्जा षं लज्जा नमः

श्रं वधूम् श्रं नमः श्रं कूर्चं श्रं नमः कूर्चं श्रं कूर्चं नमः । श्रं फट् श्रं नमः फट् श्रं फट् नमः श्रं मूलं श्रं नमः मूलं श्रं मूलं नमः इति वायुधारणेन न्यासं कृत्वा मूलेन सप्तधा व्यापकं कुर्यात् । इति गुह्यपोढा ।

ह्रीं ऐं ह्रीं क्लीं हुं फट्

लज्जा वाग्भवबीजञ्च प्रासादं काम एव च ।
वर्मबीजं ततोऽप्यस्त्रं न्यस्तसिद्धिमवाप्नुयात् ॥

इति महापोढा ।

धूं धूं धूमावति । स्वाहा इति मन्त्रं जपेद्बुधः ।
वर्णन्यासक्रमेणैव मायया पुटिता वधूः ॥
बध्वा संपुटितान् वर्णान् विन्यसेत् साधकोत्तमः ।
षड्धा न्यासं ततः कृत्वा महासिद्धिमवाप्नुयात् ॥

इति पूर्ववत् पुटितं कृत्वा वर्णन्यासवत् पश्चायत् स्थाने षड्धा न्यसेत् । इति महापोढा ।

प्रत्यहं क्रियते येन पोढा यत्न । महामते ।
मन्त्रसिद्धिर्भवेत्तस्य स्वप्ने वाक्यं शृणोति हि ॥

इति महानन्दपरमहंसपरिव्राजकावधूतविरचिते तारा-
रहस्ये चतुर्थः पटले त्रिपोढाप्रकरणम् ।

---

पोढां नत्वा मत्स्यमांसं परमाद्यादिभिर्युतम् ।
सायंसन्ध्यां ततः कृत्वा योगं च परिकल्पयेत् ।
आधारमूलं श्रोवायं मेरुदण्डं प्रकीर्त्तितम् ॥
तदाश्रित्य वसेत् लोके कोटितीर्थत्रयं सखे ।
वामे तदंशे नाडी स्यात् ईडा सर्वार्थसिद्धिदा ॥
दक्षिणे पिङ्गला नाडी सर्वतीर्थमयी शुभा ।
सुषुम्ना मेरुपुरतः पुण्यनाद्यखिलप्रदा ॥

तन्मध्ये चित्रिणी यथा तन्मध्यमध्यतः स्मृता ।
ब्रह्मनाडी समाख्याता ब्रह्मानन्दप्रदायिनी ॥
इन्दीवरमृणालेव राजते मध्यमध्यतः ।
स्थिरवायुसमायोगात्तिष्ठत्येव चराचरम् ॥
स तावत् कुण्डलीशक्तिर्नासावायुः प्रकीर्त्तितः ।
मायायोगसमायोगात् तत्र चाष्टस्थितानि वै ॥
तिलकाकाररजतं तथा भाति च तिष्ठति ।
चैतन्यरहिता नाड्यो यथास्तिष्ठन्ति देहतः ॥
तीर्थं पुण्यं महापीठं तदाश्रित्य च तिष्ठति ।
यन्त्रं च देवता तत्र मूले च परिनिष्ठिता ।
मेरोर्मूले यथा पद्मं मूलाधारं प्रकीर्त्तितम् ॥
चतुरङ्गुलविस्तीर्णम् उच्छ्रितं चतुरङ्गुलम् ।
चतुःपत्रं शोणवर्णं त्रिकोणं कर्णिका ततः ॥
तन्मध्ये बिन्दुरूपोऽपि डाकिनीशक्तिसंयुता ।
स्वयम्भूलिङ्गमाख्यातं स्वर्णवर्णं सुशोभनम् ॥
यवपञ्चकमानन्तु महालिङ्गं मनोहरम् ।
वेष्टयित्वा च विहरेत् शक्तिः कुण्डलिनी परा ॥
विलोलभुजगाकारा ब्रह्मरूपविधारिणी ।
सार्द्धत्रिवलयाकारा महायोगमयी सदा ॥
षट्पदेव प्रोच्यमाना नैव लिङ्गं त्यजेत् क्वचित् ।
सूर्य्यकोटिप्रतीकाशा चन्द्रकोटिसुशीतला ॥
तडिच्चञ्चलरूपाभा परब्रह्मस्वरूपिणी ।
विराटमूर्त्तिर्देवेशो विहरेत् पूर्वतो द्वये ।
चित्कलाशक्तिसंयुक्तः स्तूयते च कृताञ्जलिः ।
महाकालो दक्षिणे च कालिकाशक्तिसंयुतः ।
स्तूयते परया भक्त्या महाज्ञानस्वरूपि

नारायणः पश्चिमे च महालक्ष्मीकुलेश्वरः ॥
स्तूयते परया भक्त्या भावेन कुण्डलीं पराम् ।
उत्तरे च महादेवः पार्वत्या सह शङ्करः ॥
स्तूयते तारिणीं देवीं सर्पाकारां महेश्वरीम् ।
यदा कदाचित् तद्वाचामिक वाक्यं शृणोति हि ॥
तदा सृष्टिं स्थितिञ्चापि संहारं कर्त्तुमेव हि ।
ते शक्ताः स्युर्महादेव ! साधु साधु प्रकाशितम् ॥
यदा लिङ्गे भवेन्निद्रा तदा निद्रां व्रजेश्वरः ।
यदा सा परमा शक्तिः स्थिरलग्ने स्थिरा भवेत् ॥
तदा पुण्यकरी लोके भविष्यति न संशयः ।
यदा मूर्द्धनि लिङ्गस्य सा ददाति सुखं परम् ॥
जपशक्तो भवेत् जीवस्तत्र मन्दे च सिद्धिदः ।
यदा पुच्छं लिङ्गमूर्द्धि ददाति ब्रह्मरूपिणी ॥
गुरुलब्धं ब्रह्मयोगी गच्छेद्वासाश्च कामिनीम् ।
षड्दलं लिङ्गमूले च पद्मं स्याद्रक्तपाण्डरम् ॥
तन्मध्ये रक्तपाण्डुस्थ लिङ्गं विश्वोद्भवाश्रितम् ।
डाकिनीशक्तिसंयुक्तं सर्वार्थिप्रदायकम् ।
ब्रह्मा विष्णुस्तथा रुद्रो भगवन्द्रः शचीपतिः ।
राजते दलमध्ये तु सर्वशक्तिसमन्वितः ।
स्तूयते परमं लिङ्गं सर्वकामार्थसिद्धिदम् ।
मूलाधारात् कुण्डलिनीं तत्र यत्नेन चालयेत् ॥
तस्याः स्पर्शनमात्रेण दलं तस्योत्तरं सुखम् ।
पद्मोपरि व्रजेत्येव महामाती महेश्वरि ! ॥
किन्तु तत्र स्थिताः सर्वे स्पर्शा गच्छन्ति तत्क्षणे ।
एकत्रीभूय ते सर्वे स्तुवन्ति सिद्धिदायिनीम् ॥
नाभावष्टदलं पद्मं नवीनजलदप्रभम् ।

विश्रान्तकस्तत्र लिङ्गं शाकिनीशक्तिसंयुतम् ॥
इन्द्रो वह्निः पितृपतिर्नैरृतो वरुणो मरुत् ।
कुवेरस्तत्र ईशानः स्वस्वशक्तिसमन्वितः ॥
तत्र पद्मस्य मध्ये तु ब्रह्मनाड़ीसमाश्रिताम् ।
कृत्वा तु तस्य पात्राणि चोत्तरञ्च विभावयेत् ॥
ते ते देवास्ततो गत्वा स्तुवन्ति भक्तिसंयुताः ।
हृदये च ततो ध्यायेत् पद्मं षोड़शभिर्दलैः ॥
महाशक्तं महापद्मं गजकुम्भाकृतिं दलम् ।
इन्द्रश्चन्द्रो गुरुः शुक्रो वामदेवः शिवापतिः ॥
ईश्वरः शङ्करः कृष्णः वामदेवः कुलेश्वरः ।
कमलानायकः कोपः कामरूपः कृपामयः ॥
करणे षोडशके च स्वस्वयोषासमन्वितः ।
स्तुयते सर्वदा भक्त्या महालिङ्गं महेश्वरम् ॥
डाकिनीशक्तिसंयुक्तं भावयेच्च परात्परम् ।
तत् पन्थानं समारुह्य तत्र देवीं समानयेत् ॥
तन्नाभि राजते जीवस्तदधः पाप एव च ।
सुरापानकृता युक्तं गुरुतल्पकटिद्वयम् ॥
वम्मदन्तसमोपेतं सदुदन्तविभूषितम् ।
महाकायं महादेवरचितं हृदये सदा ॥
नखे स्वर्णहृतं चिह्नं सर्वदोषयुतं परम् ।
नराकारं शौचहीनं कुलाचारविहीनकम् ॥
कामदं कामरूपेण रतिदोषप्रदं तथा ।
तत्र.परं भावयेच्च दशपत्रं सुशोभनम् ॥
नीलरक्तं महापद्मं सर्वसिद्धिप्रदायकम् ।
महा[illegible]ङ्गं कामनाम राजते कामिनीयुतम् ॥
कामे[illegible] शाम्भव कामाचारश्च कामुकः ।

कामिनीनायकः कामो ब्रह्मानन्दः कुलेश्वरः ॥
त्रिलोकेशः सदानन्दः कौलो दशदले स्थितः ।
स्वस्वशक्तिसमोपेताः स्तुवन्ति कुण्डलीं पराम् ॥
ललाटे नेत्रपद्मञ्च ब्रह्मलिङ्गसमन्वितम् ।
सशक्तिर्विष्णुरुद्रश्च स्तौति तारासमन्वितः ॥
तं विभिद्य गता देवी कुण्डली शक्तिरुत्तमा ।
अधोमुखं सहस्रारं मेरुदण्डाग्रनाडीतः ॥
त्रिलोकस्थास्ततो देवाः सन्ति तत्रैव शक्तिभिः ।
नाडीत्रयसमोपेतं सरोजं द्वादशं दलम् ॥
त्रिकोणकर्णिका तत्र ब्रह्मविष्णुशिवान्विता ।
दन्तावलीकवती शय्या शक्तिवर्गसमन्विता ॥
तत्रापि श्रीगुरुः साक्षात् सर्वभूतहिते रतः ।
कर्पूरधवलं देवं ब्रह्मरूपिणमव्ययम् ॥
परमं शिवमाख्यातं कौविराख्यं विभावयेत् ।
मूलादिदेवताः सर्वे स्तुवन्ति सर्वकारणम् ।
कुण्डलिनीं महाशक्तिं ललाटे कमलावतीम् ॥
भावयेत् शिवरूपेण वामभागे समानयन् ।
वामे रतिञ्च संस्थाप्य गुरोरेव सुसिद्धये ॥
समुत्थाय गुरुस्ताञ्च साकारां मन्त्ररूपिणीम् ।
तत्रापि गुरुणा देवि । चीतशक्ता महेश्वरी ॥
उपरि स्थीयते तेन महामोहविनाशिनी ।
वामपादाङ्गुष्ठतोऽस्याः वध्यतेऽमृतमुत्तमम् ॥
तत् पीत्वा सुखद् खाभ्यां जीवो जीवति नित्यशः ।
भावनाभ्यासयोगेन यदि नाडीं प्रवेशयेत् ।
महासिद्धिं स लभतेऽप्यमरो जयते ध्रुवम् ॥
इति तारायोगे योगसारः ।

यत्रास्ते कमला कृताञ्जलिपरा वीणाधरा शारदा
ताराराध्यमनुस्मरन् प्रियतमं चोमावच. कारणम् ।
श्रीब्रह्मानन्दकृतौ सुसाधनविधौ तारारहस्ये शुभे
योगाचारविधौ चतुर्थपटल सर्वार्थसिद्धिप्रदः ॥

इति तारारहस्यतन्त्रं समाप्तम् ।

